चंदा मामा बूझ के हारे –
छोटे छोटे, प्यारे प्यारे,
रंगबिरंगे कैसे तारे?
तारे नहीं, ये जेम्स हैं सारे.



Cadbury's GEMS

Cadbury's GEMS

जो चाहे खेले, जो चाहे खा ले.

जिज्ञासा –

# आत्मनेपदी, परस्मैपदी इत्यादयः

शिष्यः- श्रीमन्, 'आत्मनेपदम्' 'आत्मनेपदी' इत्यनयोः, 'परस्मैपदम्' 'परस्मैपदी' इत्यनयोः च कः भेदः?

आचार्यः- 'सुखम्' 'सुखी' इत्यनयोः कः भेदः इति वदतु तावत्।

शि - सुखम् इति तु गुणः। सुखविशिष्टः भवति सुखी।

आ - एवम् एव 'आत्मनेपदम्' इति संज्ञा। आत्मनेपदविशिष्टः भवति 'आत्मनेपदी'।

शि - संज्ञा नाम?

आ - कस्यचित् बालकस्य नाम भवति गणपतिः इति। सः बालकः वस्तुतः न गणस्य प्रभुः। तथापि तद्व्यक्तेः ज्ञानार्थं वयं सूचयामः गणपतिः इति। एतत् एव संज्ञा इति उच्यते। एवम् एव आत्मनेपदं परस्मैपदम् इत्यादिकं संज्ञा।

शि - आत्मनेपद-परस्मैपदयोः कः अर्थः?

आ - संज्ञा तु व्यक्तिज्ञानार्थं खलु? अतः संज्ञापदानाम् अर्थः स्यात् चेदपि तद्विषयकचिन्तनेन प्रकृते किमपि प्रयोजनं नास्ति।

शि - श्रीमन्, क्रियाफलं परगामि चेत् परस्मैपदी, क्रियाफलम् आत्मगामि चेत् आत्मनेपदी इति मया कुत्रापि पठितम्!

आ - क्रियापदस्य मूलरूपाणि धातवः इति उच्यन्ते। धातुषु त्रैविध्यं – परस्मैपदिनः, आत्मनेपदिनः, उभयपदिनः चेति। यस्य परस्मैपदिरूपाणि आत्मनेपदिरूपाणि च भवन्ति सः धातुः उभयपदी इति उच्यते। उभयपदिषु धातुषु केवलं आत्मनेपदिरूपाणां परस्मैपदिरूपाणां च अर्थभेदः भवति।

यस्याः क्रियायाः फलं अन्यः प्राप्नोति तस्य परस्मैपदित्वं, तथैव यस्याः क्रियायाः फलं स्वयं प्राप्यते तस्य आत्मनेपदित्वम् इति काचित् व्यवस्था अस्ति। यथा–

पच्धातुः उभयपदी। पाकः अन्यार्थं चेत् परस्मैपदिरूपं योजनीयम्। उदा – देवदत्तः रामार्थं पचति। पाकः आत्मनिमित्तं चेत् आत्मनेपदिरूपं योजनीयम्। उदा – देवदत्तः पचते। (स्वनिमित्तम् इत्यर्थः।)

एवं च उभयपदिषु क्रियाफलस्य परगामित्वे परस्मैपदित्वम्, आत्मगामित्वे आत्मनेपदित्वम् इति अन्वर्थता अस्ति। इतरत्र तु न।

शि - देवदत्तः रामार्थं पचते इति वा, देवदत्तः आत्मार्थं पचति इति वा न वक्तव्यं वा एवं तर्हि?

आ - वस्तुतः नियमः तथैव सूचयति। किन्तु प्राचीनकालतः अपि महाकाव्यादिषु अपि एषा व्यवस्था न अनुसृता। अर्थभेदे सत्यपि बहुभिः तत् अनादृत्य व्यवहारः कृतः दृश्यते।

शि - केवलपरस्मैपदिषु केवलात्मनेपदिषु वा क्रियाफलं परगामि आत्मगामि वा भवतु, रूपं तु नियतम् एव।

आ - आम्। गम्लृ धातुः (गच्छति) परस्मैपदी। गमनं परार्थं वा भवतु, आत्मार्थं वा भवतु रूपं गच्छति इत्येव। एवम् एव नित्यात्मनेपदिषु अपि। उभयपदिषु अपि अर्थभेदस्य अनादरात् व्यवहारसन्दर्भे क्रियाफलविषये चिन्तनीयं नास्ति।

शि - कः धातुः आत्मनेपदी, कः परस्मैपदी, कः उभयपदी इति कथं ज्ञातव्यम्?

आ - एतत् तु गुरुमुखात्, अनुभवबलात् च ज्ञातव्यं भवति। तथापि कुत्रचित् ज्ञातुं शक्यते, येन क्रियापदस्य मूलं रूपं (धातुः) ज्ञातं तेन। यस्य धातोः अन्ते *इत्संज्ञायुक्तः ङकारः भवति सः आत्मनेपदी भवति। उदा- शीङ्, चक्षिङ्, प्लुङ् इत्यादयः। एवम् एव येषाम् अन्ते ञकारः इत्संज्ञायुक्तः भवति ते उभयपदिनः भवन्ति। उदा- कृञ्, वृञ्, हृञ्, क्रीञ् इत्यादयः। इतरत्र तु एवं सुलभतया ज्ञातुं कोऽपि मार्गः नास्ति।

---

*यस्य वर्णस्य इत्संज्ञा भवति तस्य वर्णस्य लोपः भवति।




# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

**'सं**स्कृतभाषा इदानीं वृद्धा जाता अस्ति। वृद्धायाः तु गृहस्य कोणे उपवेशनम् एव शोभते। अतः संस्कृतभाषया सम्भाषणं, व्यवहारपथे तस्याः पुनरानयनम् इत्यादिकम् अनावश्यकम् एव' इति केषाञ्चित् वादः।

भाषायाः बाल्यं तारुण्यं च यथा अस्ति तथैव वार्धक्यम् अपि भवति एव इति तु सत्यम् एव। किन्तु बाल्यवार्धक्यादयः सापेक्षाः। यस्य आयुःप्रमाणं निश्चितं तस्यैव वार्धक्यं निर्णेतुं शक्यते। यथा– मानवस्य आयुःप्रमाणं शतं वर्षाणि इति प्रसिद्धिः। अतः षष्टिवर्षीयः वृद्धः इति परिगण्यते। तुल्यन्यायेन भाषायाः वार्धक्यं निर्णेतुं न कदापि शक्यते। भाषायाः आयुःप्रामाणं केन निश्चितं, येन वार्धक्यं निर्णेतुं शक्येत? याः भाषाः इदानीं न जीवन्ति तासां तु वार्धक्यकालं गणयितुं शक्नुमः वयम्। याः जीवन्ति तासां विषये तथा कर्तुं न शक्यते। भाषाणाम् आयुःप्रमाणं समानं नास्ति। काश्चन शतं वर्षाणि जीवेयुः, पुनः काश्चन पञ्च शतं वर्षाणि। अन्याः काश्चन सहस्रं वर्षाणि जीवेयुः, अपराः काश्चन द्वित्रवर्षसहस्राणि ततोऽप्यधिकं वा जीवेयुः। एवं स्थिते का भाषा कस्याम् अवस्थायाम् अस्ति इति कथं निर्णयः?

प्रगतेः ह्रासः, प्रचारस्य आधिक्यम् इत्यादयः शक्तेः सामर्थ्यस्य वा निर्णायकाः भवितुम् अर्हन्ति, न तु वार्धक्यस्य यौवनस्य वा।

सम्पुटः–५ जून्–१९८८ सञ्चिका–३

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

CHITRA

# यानं न आगतम्

| | | |
|---|---|---|
| I - | श्रीमन्, हैदराबाद्यानं कुत्र तिष्ठति? | Sir, which is the station for buses going to Hyderabad? |
| II - | अत्रैव। भवता आरक्षणं कृतं वा? | This is the one. You have a reservation? |
| I - | आम्। मम आसनसङ्ख्या १४। | Yes, my seat No. is 14. |
| II - | भवान् केन यानेन गच्छति? | Which bus are you taking? |
| I - | नववादने यत् निर्गच्छति तेन। | The 9 o'clock bus. |
| II - | अहम् अपि तेनैव यानेन गच्छन् अस्मि। भवतः आसनस्य पार्श्वस्थम् एव मम आसनम्। | I am going by the same bus. My seat is next to yours. |
| I - | एवं वा? समीचीनः सहवासः प्राप्तः मया। | Is that so? I have some one to keep company. |
| II - | मया अपि तथैव खलु। किन्तु अस्माकं यानम् इतोऽपि न आगतम् एव! | I feel I too have. But the bus which should take us hasn't arrived yet! |
| I - | अहो सत्यं खलु! पादोननववादनं तु अतीतम् एव। | Oh! it is true! It is already quarter to nine! |
| II - | अनन्तरकाले याभ्यां यानाभ्यां प्रस्थातव्यम् अस्ति ताभ्यां तु आगत्य स्थितम् अस्ति। | But those buses which leave later have arrived already! |
| I - | कार्यालयं गत्वा विचार्य आगच्छाम वा? | Shall we go up to the office and find out? |
| II - | तदपि मया कृतम् एव। इदानीम् आगच्छेत् इति तत्र उत्तरं दीयते, तावदेव। | I have done it already. The reply I got was that the bus will arrive soon. That is all. |
| I - | तत्र पश्यतु, अस्माभिः येन गन्तव्यं तत् यानम् आगतम् इति भाति। | There, look, that seems to be the one which we should take! |

# र स वा र्ता:

## शान्तिकपोतप्रचार:

प्रपञ्चस्य विभिन्नेभ्य: भागेभ्य: लक्षश: जना: "वयं कीदृशे प्रपञ्चे वासं कर्तुम् इच्छाम:" इत्येतम् अंशं सोवियत्-अध्यक्षम् अमेरिका-अध्यक्षं च पत्रद्वारा सूचितवन्त:। तेषु पत्रेषु २,५०,००० पत्राणि एतं भावं प्रकाशयन्ति यत् अग्रदेशीया: नायका: शान्तिकपोतप्रचारस्य अङ्गतया अण्वस्त्राणां शक्तिहीनतासम्पादनार्थं कार्यं कुर्यु: इति।





## शर्कराशिखरम्!

कोलालम्पूरनगरे यव् रिचर्डनामक: उपाहारमन्दिरे कार्यं करोति। स: ईफिलटवरसदृशं शर्कराशिखरं कदाचित् निर्मितवान्। ४७ कि.ग्रां शर्करया २.४३ मी. उन्नतं एतत् शर्कराशिखरं निर्मातं तेन ८० घण्टात्मक: काल: स्वीकृत:।

## कुजग्रहं प्रति यात्रा

सोवियत् यूनियन् अमेरिका च सहकृतरूपेण कुजग्रहं प्रति मानवसहितां अन्तरिक्षनौकां प्रेषयेताम् इति अभिप्रायं सोवियत् नायक: मिखैल् गोर्बचेव् प्रकटितवान्। एषु दिनेषु श्वेतभवने अमेरिकादेशीयै: प्रमुखै: सह समालोचनानन्तरं गोर्बचेव् महोदय: एतम् अंशं प्रकटीकृतवान् इति करेन् मल्हासर् नामिका वनिता उक्तवती।






## वनं समागता: अभ्यागता:

भुवनेश्वरसमीपस्थं नन्दनकाननं प्रति टेक्सासत: द्वौ चिम्पाजी, एक: बबून् वानर:, त्रय: सामान्यवानरा:, अन्ये त्रय: मार्मोसेट्जातीया: वानरा: द्वौ काङ्गरू च आनीता:। मासद्वयाभ्यन्तरे पुन: अपि १३ प्राणिन: टेक्सासत आनीयन्ते। एतस्य प्रतिफलरूपेण अधिकारिण: टेक्सास् प्रति नन्दनकाननस्थौ श्वेतव्याघ्रौ प्रेषयिष्यन्ति।

# विक्रयणकौशलम्

अभिरामः कश्चन चित्रकारः। धनाभावकारणतः सः कदाचित् स्वकीयम् एकम् उत्तमं चित्रं विक्रयणार्थं स्थापितवान्। तत् चित्रम् अल्पमूल्येन क्रेतुम् अपि कोऽपि उत्साहं न प्रकटितवान्।

एषा वार्ता दूरस्थे प्रान्ते स्थितेन विठ्ठलेन अपि ज्ञाता। सः अभिरामस्य आत्मीयः स्नेहितः। अतः सः अभिरामस्य गृहम् आगत्य विक्रयणार्थं स्थापितं तत् चित्रं स्वगृहं नीतवान्। सर्वे यथा पश्येयुः तथा गृहे भित्तौ उत्तोलितवान् च।

अनन्तरं सः गृहम् आगतान् उक्तवान्– "विदेशीयात् चित्रकारतः पञ्चाशत्सुवर्णनाणकैः एतत् क्रीतम्" इति। कोऽपि तत् चित्रं क्रेतुम् इच्छति चेत् एषः असमाधानेन वदति– "एतत् विक्रयणार्थं न स्थापितम्" इति।

एतस्य चित्रस्य वार्ता पार्श्वग्रामस्थेन भूस्वामिना अपि श्रुता। सः विठ्ठलस्य गृहम् आगत्य आग्रहेण द्विशतं सुवर्णनाणकानि विठ्ठलस्य हस्ते समर्प्य चित्रं नीतवान्।

विठ्ठलः अभिरामस्य गृहम् आगत्य तत् धनम् अर्पितवान्। तदा अभिरामः आश्चर्येण पृष्टवान्– "किम् एतत् धनम्?" इति।

"भवतः चित्रस्य मूल्यम् एतत्" इति उक्तवान् विठ्ठलः।

"एतावता मूल्येन तत् चित्रं विक्रीतं वा?" इति परमाश्चर्येण पृष्टवान् अभिरामः।

विठ्ठलः हसन् प्रवृत्तं निवेद्य उक्तवान्– "चित्रलेखनार्थं यथा प्रतिभा कौशलं च आवश्यकं तथैव तस्य विक्रयणार्थम् अपि कौशलम् आवश्यकम्" इति।






# यौवनविनिमयः

फ्रान्सदेशे पूर्वं काचित् महाराज्ञी आसीत्। तस्याः प्रासादः अमृतशिलाभिः निर्मितः। रजतपटलेन प्रासादस्य आच्छादनं कृतम् आसीत्।

प्रासादस्थानि सर्वाणि पात्राणि सुवर्णमयानि रजतमयानि वा। आभरणादिषु तत्र तत्र नव रत्नानि योजितानि आसन्। वस्तुतः तु सा राज्ञी काचित् मन्त्रवादिनी। यत् इच्छति तत् अपरक्षणे प्राप्यते स्म तया।

मन्त्रवादिन्याः अपि महाराज्ञयाः सामर्थ्यबाह्यम् एकं कार्यम् आसीत्। तच्च – वृद्धा सा पुनः अपि यौवनं प्राप्तुं न शक्नोति। यौवने तु सा अपूर्वसुन्दरी एव आसीत्। इदानीं तस्याः सौन्दर्यम् एतावत् विरूपतां गतम् आसीत् यत् कार्यनिमित्तम् आगताः तां द्रष्टुम् अनिच्छन्तः केनापि व्याजेन मुखं परिवर्तयन्ति। आदिनं कासमाना सा कम्पमाना कथञ्चित् सञ्चरति। तस्याः सेवार्थं दास्यः अपि जुगुप्साम् अनुभवन्ति। किन्तु अनिवार्यतया तस्याः सेवां कुर्वन्ति।

अल्पे एव काले तस्याः एकस्य नेत्रस्य दृष्टिः अपगता। इदानीं सा स्वकीयं रूपं दर्पणे स्वयं द्रष्टुम् अपि न इच्छति। सुन्दरैः सह न व्यवहरति। तस्याः प्रासादे काणाः कुब्जाः च सेवकत्वेन नियुक्ताः आसन्।

एकदा पञ्चदशवर्षीया काचित् बालिका रक्षकाणां दृष्टिपातात् आत्मनः रक्षणं कथञ्चित् कृत्वा राज्ञ्याः पुरतः आगत्य स्थितवती। तस्याः सौन्दर्यं तु अपूर्वम् आसीत्। छिन्नं वस्त्रं धृतवत्याः तस्याः नाम मेरी।

तां दृष्ट्वा क्रुद्धा राज्ञी सर्पिणी इव फूत्कुर्वती उत्थाय– "एतां दुष्टां बालिकां मम समीपं कः प्रेषितवान्? अनुमतिं विना

एषा कथम् अत्र आगता? कियत् औद्धत्यम् एतस्याः! एतत्क्षणे एव एताम् इतः निष्कासयन्तु" इति गर्जितवती।

एतत् गर्जनं श्रुत्वा अपि निर्भीका मेरी मन्दहासं प्रकटयन्ती– "महाराज्ञि! मां कोऽपि अत्र न प्रेषितवान्। मन्त्रबलात् अहम् एव अत्र आगतवती। भवती यदि इच्छति तर्हि अहं मम सौन्दर्यं यौवनं च भवत्यै दातुं सिद्धा। किम् इच्छति भवती?" इति पृष्टवती।

एतत् वचनं श्रुतवत्याः महाराज्ञ्याः कोपः झटिति निर्गतः। आश्चर्यं सन्तोषः च तत्र दृश्यते।

सा मेरीं निर्निमेषदृष्ट्या पश्यन्ती पृष्टवती– "वस्तुतः अपि भवती दातुं सिद्धा? प्रतिफलरूपेण किम् इच्छति?" इति।

"भवत्याः ऐश्वर्यं समग्रं मम भवेत्। मुकुटम् अपि मदधीनं स्यात्" इति उक्तवती मेरी।

तदा महता क्रोधेन राज्ञी गर्जितवती– "किम् इच्छति? मम ऐश्वर्यं मुकुटं च? अहम् एवम् एव तिष्ठन्ती कदाचित् प्राणान् त्यजेयं, किन्तु मुकुटम् ऐश्वर्यं च न कदापि दद्याम्। दुष्टे! निर्गच्छतु इतः। गच्छतु" इति।

निराशा मेरी मौनं ततः निर्गतवती।

केषाञ्चित् दिनानाम् अनन्तरं राज्ञी रोगपीडिता अभवत्। परिचारिकाः अपि तस्याः सेवां कर्तुम् अनिच्छन्त्यः केनापि व्याजेन दूरे तिष्ठन्ति।

'द्वित्रेषु सप्ताहेषु एषा प्राणैः वियुक्ता भवेत्' इति उक्त्वा वैद्यः अपि असहायकतां



प्रदर्श्य गतवान्।

राज्ञी इदानीं मेर्याः अन्वेषणार्थं दूतान् सर्वत्र प्रेषितवती। 'समग्रा सम्पत्तिः मुकुटं चापि दीयते' इति वार्ता अपि तया प्रेषिता।

राज्ञीसमीपम् आगता मेरी उक्तवती– "महाराज्ञि! भवत्यै यौवनं सौन्दर्यं च ददामि चेत् अहं भवती इव वृद्धा कुरूपिणी च भविष्यामि। यद्यपि एवं विनिमयेन सम्पत्तिः लभ्यते तथापि इदानीं मम मनः एवं कर्तुं न उत्सहते" इति।

तदा राज्ञी तस्याः प्रशंसां बहुधा कृतवती। मधुरैः वचनैः तां वशीकृतवती। अन्ते मेरी यौवनविनिमयम् अङ्गीकृतवती। अनन्तरक्षणे एव विनिमयः अपि जातः।

राज्ञी सुन्दरी तरुणी च जाता अस्ति। तस्याः शरीरं सुवर्णवर्णेन शोभते। नेत्रयोः चाकचक्यता। अङ्गाङ्गेषु उद्गच्छत् यौवनम्। तस्याः सौन्दर्यं जितेन्द्रियम् अपि विचलितं कर्तुं समर्थम् अस्ति। किन्तु सा इदानीं निर्धना। समग्रा सम्पत्तिः मेर्यै दत्ता अस्ति खलु?

अतः तयाः इतःपरं कुटीरे निवासः करणीयः। कटे शयनं करणीयम्। छिन्नानि वस्त्राणि धरणीयानि। उदरम्भरणार्थं परिश्रमः करणीयः च।

मेरी च जुगुप्साजनकं कुरूपं प्राप्तवती अस्ति। किन्तु सा राजमुकुटधारिणी इदानीम्। भव्ये प्रासादे तस्याः वासः। सेविकानां सङ्ख्या अपि अपरिमिता।

मेरी दर्पणे स्वकीयं नूतनं रूपं दृष्टवती।





जुगुप्साजनकं तत् विरूपं द्रष्टुम् अशक्ता सा हस्तेन नेत्रे पिहितवती। कोऽपि सम्मुखं न आगच्छेत् इति आज्ञां कृतवती सा। 'परितः स्थितानि भोगसाधनानि धनराशिं च पश्यन्ती अहम् आत्मनः सन्तोषं सम्पादयामि' इति आलोचितवती सा। किन्तु तानि भोगसाधनानि, सुवर्णाभरणानि, धनराशिः वा तस्याः विरूप-वार्धक्यनिमित्तकं दुःखम् अपरसारयितुं शक्तानि न अभवन्। तानि तां दृष्ट्वा उपहसन्ति इव।

मेरी ग्रामे सखीभिः सह उद्याने आम्रवाटिकायां च विहरति स्म, नृत्यति स्म च। तम् अभ्यासं स्मरन्ती सा भवने नृत्यं कर्तुम् उद्युक्ता। किन्तु आधारदण्डं विना तया स्थातुम् एव सर्वथा न शक्तम्। का कथा नृत्यस्य?

दन्तानाम् अभावतः सा फलादिकम् अपि खादितुं न शक्नोति। यवागूः एव तस्याः आहारः।

तस्याः पश्चात्तापः दिने दिने वर्धते। 'मया अविचार्य ग्रौवनं सौन्दर्यं च महाराज्ञ्यै दत्तम्। अहो मूर्खता मम' इति उद्गारं प्रकटयति सा। ऐश्वर्यं यावत् वा भवतु, तस्य ऐश्वर्यस्य भोगार्थं साधनभूतं शरीरबलं सर्वप्रथमं भवेत् खलु?

एतावत्पर्यन्तं मेरी अजाः चारयन्ती क्रीडन्ती च दिनानि यापयति स्म। अतः सा अतीव जटिलस्य राजकीयव्यवहारस्य प्राथमिकं ज्ञानं प्राप्तुम् अपि न शक्तवती।

राज्ञी मेर्याः ग्रामम् आगता अस्ति। यद्यपि सा वार्धक्यजनिताम् अशक्तताम् असौविध्यं च न अनुभवति, किन्तु दारिद्र्यतापं सोढुं सर्वथा न शक्नोति। एतावत्पर्यन्तं यत् शरीरं राजभोगेन प्रवृद्धं तादृशं कथं वा कष्टं सोढुं सिद्धं भवेत्? ग्रामे कोऽपि तस्याः योगक्षेमं न पृच्छति। सर्वे स्वकार्येषु मग्नाः सन्ति।

"किमिदं वैपरीत्यम्! राजकुलोत्पन्नया मया किम् अत्र कुटीरे भूमौ शयनं करणीयम्? परमसुन्दर्या मया किं छिन्नानि वस्त्राणि धरणीयानि? अस्मिन् कुग्रामे मम सौन्दर्यं को वा पश्यति? अत्रत्यस्य कस्यापि सौन्दर्यप्रज्ञा एव नास्ति। यौवनस्य सौन्दर्यस्य च

आकर्षणेन अहं राजमुकुटम् ऐश्वर्यं च दत्त्वा महतीं मूर्खताम् आचरितवती। तद्भयं पुनः प्राप्तुं यदि शक्येत तर्हि कियत् समीचीनं स्यात्?' इति प्रतिक्षणं विलपति राज्ञी।

किं करणीयम् इति तस्याः महती चिन्ता। वार्धक्यं पुनः प्राप्तं चेत् मरणं भवेत् इति भीतिः। यौवनावस्थायां तु असह्यः दारिद्र्यतापः!

बहुधा विचिन्त्य राज्ञी एकं निश्चयं प्राप्तवती— 'वार्धक्यं मरणं च जीवने कदाचित् भवेत् एव। इदानीं यत् यौवनं प्राप्तम् एतत् तु न शाश्वतिकम्। एतदनन्तरं पुनः वार्धक्यादितापाः सन्ति एव। अतः यौवनस्य निमित्तं सम्पत्तेः अधिकारस्य वा त्यागः अनुचितः। 'जातस्य मरणं ध्रुवम्' इति नीतिः स्मर्तव्या। पुनः अपि वार्धक्यप्राप्तिः एव श्रेयस्करी' इति।

एवं निश्चित्य सा तद्दिने एव राजभवनं गतवती। तां दूरतः एव दृष्ट्वा तस्याः आगमनकारणं तर्कितवती मेरी। मेरी अपि राज्ञीजीवनतः श्रान्ता आसीत् एव। अतः विशेषचर्चां विना एव ते स्वकीयं पूर्वतनं रूपं प्राप्तवत्यौ।

राज्ञी पुनः अपि वृद्धा कुरूपिणी च जाता खलु? सा स्वकीयम् एतत् घोरं रूपं विलोक्य आतङ्केन मेरीम् उक्तवती— "मेरि! मया पुनः अपि अपराधः कृतः। भवत्याः यौवनम् एव श्रेष्ठम्। अतः आवां पुनः अपि रूपपरिवर्तनं करिष्यावः" इति।

किन्तु मेरी एतं प्रस्तावं निराकुर्वती— "महाराज्ञि! उभयविधं जीवनम् अपि मया अनुभूतम्। राजकीयसमस्यासु पतितुं वार्धक्यमूलाम् निश्शक्तिम् अनुभोक्तुं च अहं न इच्छामि। मम एतत् राज्ञीजीवनं सर्वथा मास्तु। यथापूर्वम् अजाः चारयन्ती परिश्रमेण जीवन्ती क्रमप्राप्तं वार्धक्यम् एव अहं प्राप्स्यामि। तत्रैव मम हितम् अस्ति। मया एतावता उत्तमः पाठः पठितः। दिने दृष्टे कूपे रात्रौ पतितुं मम इच्छा नास्ति" इति वदन्ती सन्तोषेण उत्प्लवमाना ततः निर्गतवती।





# वास्तविकं प्रेम

अ अमरावतीनगरे आदिशेषः नाम सुवर्णवणिक् आसीत्। तस्य गङ्गा, यमुना, सरस्वती इति तिस्रः पुत्र्यः। यदा ताः प्राप्तवयस्काः जाताः तदा तासां मातृवियोगः सम्पन्नः।

इदानीम् आदिशेषः वार्धक्ये अस्ति। पत्नीवियोगदुःखम् अनारोग्यं च तम् अहर्निशं पीडयतः। एतासां तिसृणां विवाहम् अपि युगपत् एव कारयित्वा विद्यमानम् ऐश्वर्यम् एतासु विभज्य निश्चिन्तजीवनं यापनीयम् इति आदिशेषस्य इच्छा।

एकदा सा पुत्रीः स्वसमीपम् आहूय पृष्टवान्– "अहं तु वार्धक्ये अस्मि। वाणिज्यनिर्वहणस्य सामर्थ्यम् अपि नास्ति मम। द्वित्राणां वर्षाणाम् अनन्तरं मम प्राणच्युतिः भवेत् इति वैद्यः अभिप्रायं प्रकटयति। अतः भवतीनां तिसृणाम् अपि विवाहं समाप्य अन्तिमा अपेक्षा काशीयात्रा अपि समापनीया। शिष्टम् आयुः भवतीषु कस्याश्चित् गृहे यापनीयम् इति मम आशयः। भवत्यः एतद्विषये किम् अभिप्रयन्ति?" इति।

ज्येष्ठा पुत्री गङ्गा क्षणकालम् आलोच्य उक्तवती– "तात! भवतः विचारः युक्तः एव। किन्तु विवाहानन्तरं स्त्री पत्यधीना भवति खलु? अतः पत्या यथा उच्यते तथा व्यवहरणीयं भविष्यति। भवतः अस्मद्गृहे वासं मम भावी पतिः अङ्गीकुर्यात् वा न वा इति अहम् इदानीं कथं वदेयम्?" इति।

'एतत् तु युक्तम् एव' इति आलोच्य आदिशेषः द्वितीयां पुत्रीं पृष्टवान्– "भवती किं चिन्तयति एतद्विषये?" इति।

तदा यमुना – "अग्रजया यत् उक्त तत् युक्तम् एव। भाविनः पत्युः व्यवहारः चिन्तनं च कथं भवेत् इति इदानीम् एव कथं ज्ञातुं शक्यते? एवं तु भवितुम् अर्हति...." इति

वदन्ती वाक्यम् अर्धे स्थगितवती।

"किं कर्तुं शक्यते इति वदतु तावत्" इति उक्तवान् आदिशेषः।

"मां नगरस्थः युवकः एव यथा परिणयेत् तथा करोतु। तदा अहम् अन्यस्मिन् गृहे निवत्स्यामि चेदपि समीपे एव भविष्यामि खलु? तदा तदा आगत्य भवन्तं दृष्ट्वा गमिष्यामि" इति उक्तवती यमुना।

"एतत् तु महते सन्तोषाय" इति उक्त्वा आदिशेषः तृतीयां पुत्रीं सरस्वतीम् उक्तवान्– "पुत्रि! भवती स्वाभिप्रायं वदतु तावत्" इति।

एतावत्पर्यन्तं शिरः अवनमय्य सा अग्रजयोः वचनं शृण्वती आसीत्। इदानी सा अश्रुपूर्णनेत्रा गद्गदस्वरेण उक्तवती– "मम विवाहार्थं का त्वरा? इदानीम् एव अस्वस्थस्य भवतः एकाकिनः काशीयात्राम् अहं न अङ्गीकरोमि। अहम् अपि भवता सह आगमिष्यामि। भवान् यावत् जीवति तावत् भवतः साहाय्यकत्वेन तिष्ठन्ती सेवां करोमि। अनन्तरं विधेः इच्छा यथा अस्ति तथा भवतु नाम" इति।

पुत्र्याः प्रेमाभिमानादिकं दृष्टवतः आदिशेषस्य नेत्राभ्याम् अपि अश्रूणि आगतानि।

सः वस्त्रेण अश्रूणि मार्जयित्वा– "मूर्खे! सरस्वति! किमर्थम् अश्रुस्रावणम्? भवत्याः प्रेमादरादिकं दृष्टवतः मम जीविते आशा उद्दीपिता अभवत्" इति उक्त्वा तस्याः शिरः प्रीत्या आमृष्टवान्।

अनन्तरम् आदिशेषः गङ्गायाः यमुनायाः च विवाहं निर्वर्त्य सम्पत्तिं द्विधा विभज्य ताभ्यां दत्तवान्। कनिष्ठया सरस्वत्या सह काशीं प्रति प्रस्थितवान्।

षण्णां मासानाम् अनन्तरं काशीयात्रां समाप्य प्रत्यागतः आदिशेषः योग्यं वरम् अन्विष्य सरस्वत्याः विवाहं निर्वर्तितवान्। जामातरं स्वगृहे एव स्थापयन् सुवर्णवाणिज्यं तदधीनं कृत्वा कानिचन वर्षाणि यावत् सुखेन जीवितवान्।



# निधिः

पूर्वम् अरण्यस्य पार्श्वे काचित् वृद्धा निवसति स्म। तस्याः जगदीशः नाम दशवर्षीयः बालकः आसीत्। सः प्रतिदिनम् अरण्यं गत्वा फलानि औषधिमूलानि इत्यादीनि आनयति। माता समीपस्थेषु ग्रामेषु तेषां विक्रयणं कृत्वा धनम् आनयति। एवं तयोः जीवनयात्रा प्रचलति।

मातुः कष्टं दृष्ट्वा जगदीशः अतीव खेदम् अनुभवति। अरण्ये निधिः भवति इति तेन श्रुतम् आसीत्। तादृशं निधिं प्राप्य मातुः कष्टं निवारणीयम् इति सः सदा चिन्तयति।

एकदा सायङ्काले सः अरण्ये अटन्.प्रतिदिनम् इव "अये वृक्षराज! भवतः किं वयः? अये पक्षिराज! भवतः किं नाम?" इति पृच्छन् अग्रे गतवान्।

एकत्र सः विचित्रेण वेषेण अलङ्कृतं, विविधैः पुष्पैः चापि अलङ्कृत कञ्चन वामनं दृष्टवान्। सः गायन् वृक्षस्य अधः उपविष्टवान् आसीत्।

जगदीशः तस्य समीपं गत्वा स्वकीयं कष्टं निवेद्य मातुः परिस्थितिम् अपि निवेद्य पृष्टवान्– "अत्र कुत्रापि निधिः स्यात् वा? यतः अहं मात्रे निधिं दातुम् इच्छामि" इति।

तदा सः वामनः उच्चैः हसन्– "भवतः मात्रा एतावता निधिः प्राप्तः एव" इति उक्त्वा वृक्षाणां मध्ये निलीनः जातः।

गृहं प्रत्यागतः जगदीशः प्रवृत्तं निवेद्य मातर पृष्टवान्– "निधिप्राप्तिविषयं भवती अद्यावधि मां किमर्थं न निवेदितवती?" इति।

तदा माता हसन्ती– "सः मम निधिः भवान् एव भोः" इति वदन्ती तं महत्या प्रीत्या आलिङ्गितवती।






# ६

[ज्ञानभूमेः राजा मायादर्पणे अर्चकस्य नैजं स्वरूपं ज्ञात्वा तदीयशिरसः च्छेदं कृतवान्। तस्यैव मायादर्पणस्य साहाय्येन विनोदस्य सौजन्यम् अपि ज्ञातवान् सः। अनन्तरं सः विषवायुप्रसारकस्य पर्वतस्य अतिक्रमणे साहाय्यकम् अदृश्यीभवनमन्त्रं विनोदाय बोधितवान्। तस्य मन्त्रस्य साहाय्येन विनोदः अदृश्यतां प्राप्य गगनमार्गम् अनुसृतवान्। तदनन्तरम् ......]

अदृश्यः भूत्वा शक्तितरङ्गरूपेण आकाशमार्गे गच्छतः विंनोदस्य मनः अपि तरङ्गरूपं प्राप्य विकीर्णम् आसीत्। यदा सः विषवायुम् अतिक्रम्य निजरूपं धृतवान् तदा अपि मनः झटिति एकरूपतां न प्राप्नोत्। तावत्पर्यन्तं सः शिलायाः उपरि पतितः आसीत्। यदा मनः एकरूपतां प्राप्नोत् तदा सः आत्मनः नैजरूपप्राप्तिं ज्ञातवान्। नेत्रे उन्मील्य हस्तापादादिकं सम्यक् प्रसार्य परितः दृष्टिं प्रसारितवान् सः।

क्षणकालं यावत् केवलम् अन्धकारः दृष्टः। अनन्तरं तु पुरतः स्थितस्य मुनेः अस्पष्टा आकृतिः दृष्टिगोचरा जाता। तस्य मुनेः नेत्रे नीलमणी इव प्रकाशतः स्म। 'हे भगवन्! अहम् अपरस्य अर्चकस्य वशे न आगतः स्यां खलु? एषः कः? कीदृशः? इतः कोऽपि अपायः तु न स्यात् खलु?' इति आलोचितवान् विनोदः।

"मनोजदासः"



विनोदे जातं चलनं दृष्ट्वा सः मुनिः पृष्टवान्– "कः भवान्? शतशः वर्षेभ्यः पूर्वम् एव पिहितं द्वारम् अतिक्रम्य एतां गुहां कथं प्रविष्टवान्? वायुं विना अन्यस्य कस्यापि प्रवेशः अत्र सर्वथा असाध्यः खलु?" इति।

"किं वदति भवान्? शतशः वर्षेभ्यः पूर्वम् एव गुहाद्वारं पिहितम् इति? एवं तर्हि तदारभ्य भवता बाह्यः प्रपञ्चः एव न दृष्टः? आहारं विना एव भवान् शताधिकानि वर्षाणि यापितवान् वा?" इति आश्चर्येण पृच्छन् उत्थितवान् विनोदः।

"आम्। किन्तु मम प्रश्नस्य किम् उत्तरम्?" इति पृष्टवान् मुनिः।

विनोदः स्वकीयं वृत्तान्तं सङ्क्षेपेण निवेदितवान्। एतस्य श्रवणानन्तरं मुनिः क्षणकालं नेत्रे निमील्य ध्यानावस्थायाम् आसीत्। अनन्तरं नेत्रे उन्मील्य विनोदस्य शिरसि हस्तं संस्थाप्य– "वत्स! भवान् तु शुद्धात्मा। पवित्रे भवति कापि दुरालोचना नास्ति। अतः एव भवान् अदृश्यतरङ्गरूपेण प्रयाणं कर्तुं शक्तवान्। मया आकृष्टः सन् मम पुरतः उपस्थितः अभवत् च" इति मन्दहासपूर्वकम् उक्तवान्।

विनोदस्य मनसि उत्पन्नाः सन्देहाः सर्वे शान्ताः अभवन्। तस्य शरीरे इदानीम् आयासः लेशमात्रेण अपि न दृश्यते स्म। मनसि शान्तिः आनन्दश्च तरङ्गरूपेण उद्भवतः। एषः मुनिः महातपस्वी, महिमान्वितः दयावान् च इति प्रथम-सम्भाषणेन एव ज्ञातवान् विनोदः।

"आगच्छतु वत्स! बहिः गच्छाव। नूतनं प्रदेशं प्रदर्शयिष्यामि। बहोः कालतः पूर्वं मया बहिस्थः प्रदेशः दृष्टः आसीत्। अतः तस्य दर्शने ममापि कुतूहलम् अस्ति एव" इति उक्त्वा उत्थाय मुनिः अग्रे प्रस्थितवान्। विनोदः तम् अनुसृतवान्।

उभौ अपि गुहाद्वारसमीपम् आगतवन्तौ। द्वारे आवरणरूपेण स्थितां शिलाम् अपसारयितुं विनोदः अग्रे आगतवान्। किन्तु महता प्रयत्नेन अपि सः शिलां कम्पयितुम् अपि न शक्तवान्।

"तिष्ठतु, अहम् अपसारयामि तावत्" इति

वदन् मुनिः स्वदण्डेन शिलां स्पृष्टवान्। तदा शिला कार्पासः इव दूरे अपतत्। उभौ अपि बहिः आगतवन्तौ।



गुहा पर्वतस्य उपरि आसीत्। पर्वतमूले जनसम्मर्दयुतं सुन्दरं वैभवोपेतं नगरं दृश्यते स्म। तत् नगरं दृष्ट्वा आश्चर्यं प्रकटयन् मुनिः— 'हे भगवन्! गुहां परितः स्थिताः सुन्दराः वृक्षाः विविधाः पक्षिणः च कुत्र गताः? परितः स्थितम् अरण्यं कथम् अदृश्यम् अभवत्?' इति आत्मनि उद्गारं प्रकट्य विनोदं पश्यन् तस्य प्रदेशस्य वृत्तान्तं निवेदितवान्—

पूर्वम् एतस्मिन् प्रदेशे घोरम् अरण्यम् आसीत्। एकदा राज्ञः पीडया श्रान्तः कश्चन निर्धनः राज्यतः पलाय्य एतत् अरण्यं प्रविष्टवान्। सः पिपासया बुभुक्षया च तीव्रं पीड्यमानः आसीत्। समीपे एव लघुशिखरस्य उपरि कैश्चित् पक्षिभिः सशब्दं खाद्यमानं कलिङ्गं दृष्टवान् सः। झटिति पर्वतशिखरम् आरुह्य अवशिष्टं तत् फलं त्वरया खादितवान्। तस्य पिपासा बुभुक्षा च अपगता अभवत्।

अनन्तरं तस्य मनसि कश्चन सन्देहः उत्पन्नः— 'एते अल्पाकारकाः पक्षिणः तावत् बृहत् कलिङ्गं कथम् अत्र आनीतवन्तः?' इति। एवम् आलोचयन् सः परितः दृष्टिं प्रसारितवान्। तदा तेन समीपे एव कलिङ्गलता अपि दृष्टा। तस्य आश्चर्यस्य सीमा एव नास्ति!

"शिलामये अस्मिन् पर्वतप्रदेशे एषा कलिङ्गलता कथम् उत्पन्ना इति किम् आश्चर्यम् अनुभवति?" इति पृच्छन् समीपस्थायाः गुहातः कश्चन मुनिः बहिः आगतः। सः अहम् एव।

"आं स्वामिन्! एतत् तु परमाश्चर्यजनकं खलु?" इति पृष्टवान् सः निर्धनः।

"भवदुक्तं सत्यम्। अत्र अहं मम योगशक्त्या प्रतिदिनम् एकं कलिङ्गफलं सृष्ट्वा पक्षिभ्यः आहाररूपेण यच्छन् अस्मि" इति उक्तवान् अहम्।

"एवं वा? एवं तर्हि माम् अपि पक्षिरूपेण परिवर्तयतु कृपया। भवतः दयया प्रतिदिनं



फलं खादन् जीवामि" इति अञ्जलिबद्धं प्रार्थितवान् सः निर्धनः।

"किमर्थं पक्षिरूपप्राप्तिः? भवते यावदावश्यकं तावदाकारकं फलं सृष्ट्वा दास्यामि अहम्" इति उक्तवान् अहम्।

"महान् अनुग्रहः श्रीमताम्" इति वदन् साष्टाङ्गं नमस्कारं कृतवान् सः। नमस्कृत्य उत्थितस्य तस्य मुखे अकस्मात् अन्या चिन्तरेखा उत्पन्ना।

"भवतः बुभुक्षासमस्या तु परिहृता खलु? तथापि किमर्थं चिन्ता? का सा चिन्ता?" इति पृष्टवान् अहम्।

"एवं महान्तम् उपकारं कृतवतः भवतः विषये कृतज्ञताप्रकटनं कथम् इति एका चिन्ता। अपरा समस्या नाम - मम बुभुक्षासमस्या परिहृता चेदपि पत्नीपुत्रादीनां का गतिः? इति। तैः विना मम, मां विना तेषां वा जीवनं नास्ति एव" इति उक्तवान् निर्धनः।

"एवं वा? तर्हि भवान् भवतः परिवारजनान् अपि अत्र आनयतु। सर्वेभ्यः पर्याप्तं यथा भवेत् तादृशं कलिङ्गफलं सृष्ट्वा दास्यामि। एतेन परिहृता भविष्यति खलु भवतः चिन्ता?" इति उक्तवान् अहम्।

'आम्' इति वदन् निर्धनः विनयेन नमस्कृतवान्। किन्तु तदीये मुखे चिन्तारेखा इतोऽपि न लुप्ता।

"भोः इतोऽपि का चिन्ता?" इति पुनः पृष्टवान् अहम्।

"भवतः दयया अहं मम परिवारसदस्याः च बुभुक्षाबाधातः रक्षिताः भवेम। किन्तु मम बन्धुमित्रादीनां का गतिः? तान् अहं कथं वा विस्मरेयम्?" इति उक्तवान् निर्धनः।

"एतावदेव खलु? बन्धुमित्रादीन् अपि अत्र आनयतु। तेन न कोऽपि हानिः" इति उक्तवान् अहम्।

"स्वामिन्! भवान् वदति यत् परिवारसदस्यान् बन्धुमित्रादीन् च आनयतु इति। एवम् आगतानां सङ्ख्या सहजतया अधिकं भविष्यति एव। तदा किं सर्वे कलिङ्गफलखादनेन जीवितुं शक्नुयुः? तेषम् आनयनं चिन्तयता मया सहजतया

आगमिष्यमाणानाम् व्यवस्था अपि चिन्तनीया एव खलु?" इति नमस्कारपूर्वकं विनयेन पृष्टवान् सः निर्धनः।

क्षणकालस्य मौनानन्तरम् अहं निर्धनम् उक्तवान्– "इतः परम् अहं गुहां प्रविश्य तपसि लीनः भवितुम् इच्छामि। तपः कदा समाप्तं भवेत् इति भगवान् एव जानाति। मम योगशक्तेः प्रभावतः भवन्तः प्रतिदिनम् एकैकं कलिङ्गफलं प्राप्स्यन्ति। प्रतिदिनं सायं भवत्सु एकः आगय अनन्तरदिनस्य उपयोगार्थं कीदृशाकारकं फलम् आवश्यकम् इति उक्त्वा गच्छतु। अनन्तरदिने भवताम् अपेक्षानुगुणं कलिङ्गफलं लतायां लम्बमानं दृश्यते। तत् विभज्य खादन्तु भवन्तः। तस्य खादनेन तद्दिने पुनः बुभुक्षापीडा न भवति भवताम्" इति उक्तवान् अहम्।

निर्धनः ततः निर्गत्य परिवारजनैः बन्धुमित्रादिभिः च सह प्रत्यागतवान्। पर्वतमूले विशालप्रदेशे ते कुटीरान् निर्मितवन्तः।

एवम् आगतान् सम्मेल्य अहम् उपदिष्टवान्– "भोः भोः मित्राणि! भगवतः दयया भवद्भिः बुभुक्षानिवारणार्थं परिश्रमः करणीयः नास्ति। अतः सत्यान्वेषणं भवतां जीवनलक्ष्यं भवतु। लक्ष्यसाधनार्थम् एतत्क्षणतः एव भवन्तः प्रयत्नशीलाः भवन्तु" इति।

अनन्तरम् अहं दुर्गुणाः कथं नाशनीयाः इति, इन्द्रियाणि कथं वशे स्थापनीयानि इति, ध्यानं कथं करणीयम् इति च सम्यक् उपदिश्य एतां गुहां प्रविश्य तपसि लीनः जातः। तदनन्तरं शतशः वर्षाणि अतीतानि" इति।



मुनीश्वरेण उक्तं वृत्तान्तं श्रुत्वा विनोदः उक्तवान्– "महात्मन्! तत्काले ये शरणं गताः तैः निर्मितं स्यात् एतत् नगरम्। गुहाद्वारे कलिङ्गलता अस्ति इति अंशः मया अपि लक्षितः। अद्यापि ते ततः कलिङ्गफलं प्राप्नुवन्तः स्युः इति भावयामि" इति।

"नगरं प्रविश्य तत्रत्यं विशेषं ज्ञास्यामः वयम्" इति अग्रे प्रस्थितवान् मुनिः। विनोदः तम् अनुसृतवान्।



तौ सोपानमार्गेण अधः आगतवन्तौ। किञ्चित्कालानन्तरं मुनिः विनोदः च नगरद्वारसमीपम् आगतवन्तौ। वर्णमयम् उष्णीषं धृत्वा उभौ दृढकायौ भटौ शूलायुधं हस्ते स्वीकृत्य द्वाररक्षणं कुर्वन्तौ आस्ताम्। द्वारात् बहिः जनाः समूहरूपेण स्थितवन्तः आसन्।

"वयं सुदूरात् प्रदेशतः आगतवन्तः। पर्वतस्य उपरितनं भागं द्रष्टुं कृपया अनुमतिं ददातु" इति समूहस्थः एकः पृष्टवान्।

"अनुमतिः सर्वथा न दीयते। तत्र गन्तुम् अस्माकं नायकः केवलम् अर्हति, न अन्ये। सः अपि कीदृशाकारकं फलम् आवश्यकम् इति वक्तुं दिने एकवारं गच्छति, तावदेव" इति उक्तवान् रक्षकभटयोः अन्यतरः।

भटस्य वचनं श्रुत्वा मुनिः— "सः नायकः नाम शतशः वर्षेभ्यः पूर्वं यः शरणं गतः तस्य निर्धनस्य कुले जातः एव स्यात्" इति वदन् अग्रे गतवान्। विनोदः अपि अग्रे गतवान्।

उभौ अपि भटानां पुरतः एव द्वारम् अतिक्रम्य गतवन्तौ। किन्तु भटाः मौनम् एव आसन्।

विनोदः आश्चर्येण पृष्टवान्— "भटाः आवयोः गमनं निरोद्धुं किमर्थं प्रयत्नं न कृतवन्तः?" इति।

"आवाम् इदानीम् अदृश्यरूपेण गच्छन्तौ स्वः। आवयोः सम्भाषणम् अपि कोऽपि न शृणोति" इति उक्तवान् मुनिः।

तौ एवम् एव अग्रे गतवन्तौ। तत्र एकं महाद्वारं दृष्टवन्तौ। द्वारे एव 'निश्शब्दं स्थातव्यम्' इति सूचनाफलकं स्थापितम् आसीत्। तत् द्वारम् अतिक्रम्य एतौ विशालं मण्डपं प्रविष्टवन्तौ। तत्र केचन अधिकारिणः मण्डपं परितः स्थिते कोमलतृणमये प्रदेशे सञ्चरन्तः तदा तदा मण्डपस्य अन्तः कटाक्षेण पश्यन्तः आसन्।

"एतत् स्थलम् अहं सम्यक् स्मरामि। तत्काले अत्र विशालम् उद्यानम् आसीत्। अत्र किं करणीयम् इति मया एव उपदिष्टम् आसीत् अपि। आगच्छतु, एते इदानीं किं कुर्वन्तः सन्ति इति पश्याव तावत्" इति उक्त्वा मुनिः मण्डपस्य कोणे एकत्र स्थितवान्।

मण्डपस्य अन्तः पङ्क्तिरूपेण स्थापितेषु सुखासनेषु उपविश्य केचन सशब्दं निद्रां कुर्वन्तः आसन्। कः कियत्पर्यन्तं निद्रां करोति इति परिशील्य गणनां लिखन्तः आसन् ते अधिकारिणः। तत्रत्यस्य परिसरस्य परिशीलनेन ज्ञातं यत् सशब्दं निद्रा एव एतेषां मुख्यं कार्यम् इति। पुनः किञ्चित्कालानन्तरम् एतदपि ज्ञातं यत् यः अधिककालं निद्रां करोति तस्य विशेषप्रोत्साहः इति, यः सशब्दम् अधिककालं निद्रां करोति तस्मै पारितोषिकं दीयते इति च। अधिकारिणः एतस्य एव परिशीलने नियुक्ताः आसन्।

एतत्सर्वं दृष्टवतः मुनेः महान् कोपः आगतः। सः निद्रावशं गतान् आकृष्य अधः पातितवान्। विनोदः अपि मुनिम् अनुसरन् कांश्चन अधः पातितवान्। अल्पे एव काले कोलाहलेन स च मण्डपः व्याप्तः अभवत्। अधिकारिणः तु किङ्कर्तव्यतामूढाः सन्तः मौनं स्थितवन्तः। किं प्रवर्तमानम् अस्ति इति कोऽपि न जानाति।

मुनिः विनोदः च ततः निर्गतवन्तौ। विनोदः मुनिं पृष्टवान्– "महात्मन्! तेषां विषये भवतः कोपः किमर्थम् इति ज्ञातुम् अर्हामि वा अहम्?" इति।

"अहम् एतेषां पूर्वजान् ध्यानमार्गं बोधितवान् आसम्। किन्तु एते इदानीं ध्यानं विस्मृतवन्तः सन्ति। निद्राकरणे एतेषां स्पर्धा! तत्रापि दीर्घनिद्रां सशब्दं यः करोति तस्मै पारितोषिकम्! अहो दुर्विधिः!" इति उक्तवान् मुनिः।

अग्रे गच्छन्तौ तौ देवालयाकारकस्य भवनस्य पुरतः स्थितवन्तौ। आलयस्य प्राङ्गणे नगराधिकारिणां सभा प्रचलन्ती आसीत्। तेषां मध्ये युवकः नगरनायकः उपविष्टः आसीत्। मुनिः विनोदः च अदृश्यरूपेण गत्वा तेषां मध्ये उपविष्टवन्तौ। अल्पे एव काले आलयस्य द्वारं पिहितम् अभवत्।

(अनुवर्तते)






# पिशाचस्य विद्याभ्यासः

वृक्षारोहणं सहजप्रवृत्तिं मन्यमानः त्रिविक्रमः अनायासेन वृक्षम् आरुह्य शाखायां लम्बमानं शवम् अधः अवतार्य, शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– ''अये राजन्! पिशाचसञ्चारयोग्ये उलूक-शृगालादिवासयोग्ये अस्मिन् श्मशानस्थे मार्गे भवतः सञ्चारं दृष्टवतः मम हासः करुणा चापि। पूर्वं भवादृशः कश्चन बालः पिशाचः उपाध्यायः च आस्ताम्। तौ यथेष्टं प्रयत्नं कृत्वा अन्ते मौनं प्रत्यागतवन्तौ। भवान् अपि एवम् एव क्रियमाणं कार्यं परित्यज्य प्रतिनिवर्तेत इति मम सन्देहः। मार्गायासपरिहारार्थं तयोः कथां श्रावयामि। शृणोतु तावत्'' इति। अनन्तरं वेतालेन कथा आरब्धा–

रामपुरे बलरामः नाम कश्चन उपाध्यायः आसीत्। एकदा पत्नीविषये कुपितः सः

## वेतालकथा



ग्रामात् बहिः तिन्त्रिणीवृक्षस्य अधः उपविष्टवान्।

'एतादृश्या चण्ड्या सह कथं वा जीवेयम्?' इति चिन्तयन् आसीत् सः।

तस्मिन् तिन्त्रिणीवृक्षे कश्चन बालः पिशाचः निवसति स्म।

सः वृक्षात् उत्प्लुत्य उपाध्यायस्य पुरतः अतिष्ठत् अवदत् च– "भोः, मम दर्शनतः भीतिः मास्तु। भवान् कः इति अहं जानामि। ग्रामीणान् सर्वान् भवान् पाठयति खलु? तथैव माम् अपि पाठयतु कृपया" इति।

बलरामः आश्चर्यचकितः सन् पृष्टवान्– "कः भवान्? दर्शनेन पिशाचः इव भासते। किमर्थं भवते विद्या? विद्याभ्यासेन किं साधयिष्यति भवान्?" इति।

"विद्याभ्यासे मम महती इच्छा। बाल्ये एव मम पिता दिवङ्गतः। अतः मम पोषणभारः मातुः उपरि पतितः। जीवननिर्वहणार्थं मात्रा सह मया अपि कार्याणि करणीयानि अभवन्। अत्रान्तरे माता तीव्रेण रोगेण पीडिता जाता। मया यावत् सम्पाद्यते तावत् मातुः औषधोपचारार्थम् एव व्ययितम्। अन्ते सा अपि प्राणान् त्यक्तवती। अग्रे जीवनमार्गम् अपश्यन् अहम् अपि नद्यां पतित्वा प्राणान् अत्यजम्। इतरैः बालकैः इव मया अपि विद्याभ्यासः करणीयः इति महती इच्छा आसीत्। अतः एव पिशाचरूपं प्राप्तवान्। मां कृपया विद्यां पाठयतु। न शक्यते इति कृपया मा वदतु" इति अवदत् सः बालः पिशाचः।

"मम तु सर्वप्रथमं धनम् आवश्यकम्। तत् आनीय दातुं शक्नोति वा?" इति पृष्टवान् उपाध्यायः।

"कियत् धनम् आवश्यकम्?" इति अपृच्छत् पिशाचः।

"सहस्रं सुवर्णनाणकानि अपेक्षितानि" इति सूचितवान् उपाध्यायः।

"मम समीपे तावत् धनं नास्ति। किञ्चिदेव अस्ति। यदि अत्यावश्यकं तर्हि महाराजस्य कोषागारतः चौर्येण आनेतव्यम्। तथा करोमि वा?" इति अपृच्छत् पिशाचः।

"यतः कुतश्चित् वा धनम् आनयतु नाम। मम धनं प्रधानं, मार्गः गौणः। अन्यदपि कार्यं

करणीयं भवता। मम पत्नी प्रतिदिनम् अपि केनापि व्याजेन कलहम् उत्पादयति। भवान् तां भाययतु, सा मम वचनानि यथा अङ्गीकुर्यात् तथा करोतु। किन्तु एतत्सन्दर्भे तस्याः प्राणनिर्गमनं न भवेत्" इति सूचितवान् बलरामः।

"अस्तु, भवान् यथा सूचयति तथा करोमि। तदा भवान् मां पाठयिष्यति वा?" इति अपृच्छत् पिशाचः।

"भवतः कार्यं दृष्ट्वा मम निर्णयं श्रावयिष्यामि" इति वदन् अन्यानि कार्याणि अपि सूचितवान् बलरामः।

"मया मम ग्रामस्य धनिकतः पूर्वं ऋणं स्वीकृतम् आसीत्। तत् प्रत्यर्पितम् अपि आसीत्। किन्तु इदानीं सः धनिकः वदति – मया ऋणं न प्रत्यर्पितम् इति। ऋणं प्रत्यर्पितम् इत्यत्र मम समीपे साक्ष्यं किमपि नास्ति। केचन धनिकस्य व्यवहारं निन्दन्ति। अन्ये केचन मम व्यवहारे सन्देहं प्रकटयन्ति। इदानीं ग्रामे मम अपमानकरी परिस्थितिः अस्ति। अतः भवान् तस्मिन् आविष्टः सन् ग्रामीणानां पुरतः तन्मुखतः सत्यं वाचयतु। 'अहं नीतिनियमपरः सज्जनः, अतः एव मया अपूर्वाः काश्चन शक्तयः प्राप्ताः सन्ति' इति वार्तां ग्रामे प्रसारयतु। एतत् भवान् एव कर्तुं शक्नोति" इति सूचितं बलरामेण।

विद्याभ्यासे महती आसक्तिः आसीत् पिशाचस्य। अतः उपाध्यायेन ये ये नियमाः




सूचिताः ते सर्वे तेन अङ्गीकृताः। एतेन अल्पे एव काले बलरामस्य जीवने महत् परिवर्तनम् आगतम्।

तस्य गृहं प्रति सहस्रं सुवणनाणकानि आगतानि। तदीया पत्नी इदानीं तद्वचनं श्रद्धया पालयति। धनिकः ग्रामीणानां पुरतः स्वकीयम् अपराधम् अङ्गीकृतवान्। अपूर्वशक्तिशाली इति ख्यातिः तेन प्राप्ता अस्ति अपि।

इदानीं प्रतिदिनं तस्य गृहं प्रति शतशः भक्ताः आगच्छन्ति। तैः भक्त्या यत् धनादिकं समर्प्यते तेन बलरामः धनिकः सञ्जातः।

इदानीं सः वायौ सञ्चारं कर्तुं समर्थः।



भूमौ इव जलस्य उपरि सः लीलया सञ्चरति। वायौ हस्तं सञ्चाल्य विविधानि वस्तूनि आनयति। एकदा राजा अपि तस्य समीपम् आगत्य गतवान्।

एतावत् प्रवृत्तं चेदपि बलरामः पिशाचं विद्यां न पाठितवान्। वस्तुतः तेन इदानीं पाठनं सर्वथा त्यक्तम् आसीत्।

''मां कदा पाठयति भोः?'' इति पिशाचः प्रतिदिनं पृच्छति।

एकदा बलरामः आसमाधानेन पिशाचम् उक्तवान्– ''अये पिशाचमित्र! भवान् एव सर्वं पश्यन् अस्ति खलु। मम इदानीं क्षणमात्रस्य अपि विरामः नास्ति। पूर्वतनान् शिष्यान् पाठयितुम् एव अहं समयं न प्राप्नोमि। एतं स्थिते भवन्तं कथं पाठयेयम्?'' इति।

''कार्याणि दृष्ट्वा पाठनविषये चिन्तयिष्यामि इति भवता उक्तम् आसीत्। मया तु भवता सूचितानि सर्वाणि कार्याणि कृतानि। इदानीं भवान् मां न पाठयति चेत् महती वञ्चना भवता अनुष्ठिता भविष्यति'' इति अवदत् पिशाचः।

तदा बलरामः उक्तवान्– ''विद्याभ्यासस्य व्यामोहः किमर्थं भवतः? मद्द्वारा भवतः एव पूजा प्रचलन्ती अस्ति। मया यत् गौरवं प्राप्यते तत् भवतः एव खलु? विद्यावता मया विद्यातः किं प्रयोजनं प्राप्तम्? न किमपि। अनक्षरज्ञस्य भवतः कारणतः मया गौरवम् इदानीं प्राप्यमाणम् अस्ति। विद्याभ्यासः अलौकिकशक्तीः न ददाति। बुद्धिमन्तः अपि अलौकिकशक्तिं दृष्ट्वा अविचार्य एव पूजाम् आरभन्ते। अतः भवान् विद्यायाः व्यामोहं त्यजतु। अलौकिकी शक्तिः भवतः अस्ति एव। मद्द्वारा भवान् गौरवं प्राप्नोतु'' इति।

''मह्यं गौरवं न अपेक्षितम्। विद्या एव अपेक्षिता'' इति आग्रहेण अवदत् पिशाचः।

''क्षाम्यतु माम्। भवन्तं विद्यां पाठयितुम् अहं न शक्नोमि'' इति सूचितवान् बलरामः।

''मां पाठयितुं न शक्नोति? किमर्थम्? सयुक्तिकं कारणं भवता न उक्तं चेत् अहं भवन्तं भवतः परिवारं च नाशयित्वा एव इतः

गच्छामि" इति अवदत् पिशाचः।

बलरामः क्षणकालं मौनानन्तरम् उक्तवान्– "भोः, भवान् यत्किमपि वा करोतु, अहं तु भवन्तं पाठयितुं न शक्नोमि एव। मदीयात् अध्ययनतः मया गौरवं सम्पत्तिः वा न प्राप्ता। अतः कीर्तिकामना धनाभिलाषः च मयि प्रवृद्धः। विद्याभ्यासं कर्तुम् इच्छन्तं भवन्तम् अहं चौर्यार्थम्, असत्यकथनार्थं, वञ्चनार्थं च प्रेरितवान्। तद्द्वारा स्वार्थं सम्पादितवान् च। इदानीं भवान् पाठनीयः चेत् इतरैः छात्रैः सह भवान् उपवेशनीयः। मया प्रदर्शिता अलौकिकशक्तिः वस्तुतः मम न इति अङ्गीकरणीयम्। आत्मनः अपराधित्वं समाजे प्रकटयितुम् अहं न सिद्धः। अतः न केवलं भवन्तम्, इतःपरं कमपि न पाठयिष्यामि इति मया सङ्कल्पः कृतः अस्ति। भवान् यथा इच्छति तथा कर्तुम् अर्हति" इति।

पिशाचः क्षणकालं यावत् बलरामं करुणापूर्णया दृष्ट्या पश्यन् आसीत्। अनन्तरं ततः अदृश्यः अभवत्।

अनन्तरदिने बलरामः ग्रामीणान् सर्वान् आहूय उक्तवान्– "मया अलौकिकशक्तिः या प्रदर्शिता सा वस्तुतः मिथ्या एव। तया कस्यापि वास्तविकं प्रयोजनं नास्ति। तया मया कीर्तिः प्रप्ता इति तु सत्यम् एव। किन्तु सा न सत्कीर्तिः। अतः अहं लोकसेवां कर्तुम् इच्छन् ताम् अलौकिकशक्तिं त्यक्तवान् अस्मि। इतः परम् अहम् अपि भवत्सु



अन्यतमः सामान्यः" इति।

वेतालः एवं कथां समाप्य अपृच्छत्– "अये राजन्! मम अत्र केचन संशयाः सन्ति। बलरामेण उच्यमानम् उत्तरं समाधानकरं नास्ति चेत् सर्वनाशं करिष्यामि इति उक्तवान् आसीत् पिशाचः। एवं तर्हि बलरामस्य उत्तरेण किं पिशाचः तृप्तः? सः करुणया किमर्थं बलरामम् अपश्यत्? अलौकिकशक्तिं परित्यज्य सामान्यः भवामि इति वदतः बलरामस्य कथने प्रामाणिकतायाः अंशः कियान्? एतेषां सन्देहानां समाधानं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः अवदत्– "पिशाचेन बलरामः करुणया यत् दृष्टः तत्र कारणम् अन्यत् एव अस्ति। पण्डितः बलरामः यानि अकार्याणि भावयति स्म तानि एव पिशाचद्वारा कारितवान्। एतत् तेन स्वयं स्ववचनैः एव उक्तम्। तेन या विद्या अधीता सा तदीये जीवने कमपि प्रभावं न जनितवती। एवं स्थिते तेन बोधिता विद्या तच्छिष्याणां जीवने कमपि प्रभावं जनयेत् वा? कदापि न खलु? एतत्सर्वं ज्ञातवतः पिशाचस्य मनसि विद्याविषये निरासक्तिः उत्पन्ना। अतः एव सः बलरामं करुणया अपश्यत्। बलरामस्य वचनैः पिशाचस्य तृप्तिः न जाता चेदपि तेन सत्यम् एव उक्तम् इत्यतः कोपस्य स्थाने दया उत्पन्ना। अतः एव सः पिशाचः हानिं कामपि अकृत्वा अदृश्यः अभवत्।

बलरामः लोककल्याणार्थं अलौकिकशक्तीः त्यजन् अस्मि इति यत् उक्तवान् तत् तु असत्यम् एव। पिशाचस्य निर्गमनानन्तरं बलरामे विशेषशक्तिः कथं भवेत्? एतस्य रहस्यस्य गोपनार्थं सः ग्रामीणानां पुरतः त्यागम् उद्घुष्टवान्। एषः तु कश्चन पलायनवादः एव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# सम्मार्जकः

उत्कलदेशं पूर्वं पुरुषोत्तमदेवः नाम राजा पालयन् आसीत्। सः जगन्नाथस्य परमभक्तः। 'अहं देवस्य प्रतिनिधिरूपेण राज्यपालनं कुर्वन् अस्मि' इति सः भावयति स्म।

पुरीनगरस्थे जगन्नाथदेवालये प्रतिवर्षम् आषाढमासे महान् रथोत्सवः प्रचलति। सुप्रसिद्धे अस्मिन् रथोत्सवे असङ्ख्याः जनाः सम्मिलिताः भवन्ति। रथयात्रायां त्रयः रथाः आकृष्यन्ते। तेषां पुरतः स्थितं प्रदेशं राजा पुरुषोत्तमदेवः स्वयं सम्मार्जन्या स्वच्छीकरोति।

एकदा पुरुषोत्तमदेवः दक्षिणदिग्विजयार्थं गतः काञ्चीराजस्य पुत्रीं पद्मावतीं दृष्टवान्। तस्याः अपूर्वं सौन्दर्यं जगद्विख्यातम् आसीत्। तया आकृष्टः पुरुषोत्तमदेवः तां परिणेतुम् इच्छन् दूतद्वारा तस्याः पितरं एताम् इच्छां निवेदितवान्। काञ्चीराजः एतं विवाहप्रस्तावम् अङ्गीकृतवान्।

अनन्तरं पुरुषोत्तमदेवः काञ्चीराजम् उत्कलदेशं प्रति आगन्तव्यम् इति आहूय जगन्नाथस्य रथोत्सवः अवश्यं द्रष्टव्यः इति निवेदितवान्।

रथोत्सवदिने पुरुषोत्तमदेवः काञ्चीराजेन सह जगन्नाथदेवालयस्य समीपम् आगतवान्। देवालयात् उद्यानपर्यन्तं जनानां महान् सम्मर्दः आसीत्। जगन्नाथस्य बलभद्रस्य सुभद्रस्य च विग्रहाः त्रिषु रथेषु स्थापिताः आसन्।

काञ्चीराजेन सह वार्तालापे मग्नः पुरुषोत्तमदेवः उत्थाय सम्मार्जनीं स्वीकृत्य रथानां पुरतः स्वच्छीकरणम् आरब्धवान्। जनाः हर्षोद्गारं प्रकटितवन्तः।

पुरुषोत्तमदेवस्य सम्मार्जनव्यवहारं दृष्टवतः काञ्चीराजस्य मनसि जुगुत्सा उत्पन्ना। सः उत्सवसमाप्तिपर्यन्तम् अपि

"उत्कलीया जानपदकथा"

मौनेन स्थितवान्।

अनन्तरं स्वदेशं गतः सः दूतद्वारा वार्तां प्रेषितवान्– "सम्मार्जनं कुर्वते मम पुत्री न दीयते" इति।

एतेन तीव्रं कुपितः पुरुषोत्तमदेवः काञ्चीराज्यस्य उपरि आक्रमणं कृतवान्। एतस्मिन् युद्धे काञ्चीराजस्य पराजयः अभवत्। पुरुषोत्तमदेवेन पद्मावती बन्दीरूपेण गृहीता।

इदानीं पद्मावतीविषयकम् आकर्षणं किमपि नास्ति पुरुषोत्तमदेवे। तां परिणेतुम् अपि न इच्छति सः। एकदा सः मन्त्रिणम् आहूय आज्ञां कृतवान्– "एतस्याः पिता मां 'सम्मार्जक' इति निन्दितवान्। अतः एतां कस्मैचित् सम्मार्जकाय एव ददातु" इति।

"यथाज्ञापयति महाराजः" इति उक्तवान् मन्त्री।

किन्तु करुणामयः मन्त्री महाराजेन यथा सूचितं तथा न कृतवान्। सः पद्मावतीं स्वगृहं नीतवान्। सः तस्य पत्नी च तां पत्रीम इव पालितवन्तौ। किन्तु एतत् रहस्यरूपेण आसीत्।

केषाञ्चित् मासानाम् अनन्तरं पुनः रथोत्सवः आगतः। राजा सम्प्रदायानुगुणं सम्मार्जनीं स्वीकृत्य रथस्य पुरतः स्वच्छतार्थम् उद्युक्तः जातः।

तदा मन्त्री पद्मावत्या सह तत्र आगत्य – "प्रभो! भवतः आज्ञायाः परिपालने मया कश्चन विलम्बः कृतः। एतदर्थम् अहं क्षन्तव्यः। एषा सम्मार्जकाय दातव्या इति भवता आज्ञा कृता आसीत्। एतस्याः अनुरूपः सम्मार्जकः भवान् एव इति मम विचारः। अतः कृपया एतां परिणयतु" इति उक्तवान्।

एतावता पुरुषोत्तमदेवस्य कोपः शान्तः जातः आसीत्। सः मन्त्रिणः युक्तिं श्लाघमानः सन्तोषेण पद्मावतीं परिणीतवान्।

पुरुषोत्तमदेवस्य कुले उत्पन्नाः अद्यापि रथोत्सवदिने सम्मार्जन्या रथस्य पुरतः स्वच्छतां कुर्वन्ति।





काव्यकथा -

# शकुन्तला - ३

"दुष्यन्तः मां विस्मृतवान्। अहो दौर्भाग्यम्!" इति विलपन्तीं शकुन्तलां समाश्वास्य मेनका ताम् एकस्मिन् आश्रमे स्थापितवती। तत्र शकुन्तला पुत्रं प्रसूतवती। भरतनामकं तं पुत्रं प्रीत्या पालितवती च।

कानिचन वर्षाणि अतीतानि। एकदा कश्चन धीवरः महता प्रयत्नेन अपि नद्यां मीनान् न प्राप्तवान्। अन्ते तस्य जाले एकः महामीनः अपतत्। एतेन तृप्तः सः धीवरः तं मीनं स्वगृहं नीतवान्।





धीवरः मीनं स्वपत्न्याः हस्ते स्थापयित्वा– 'एतेन पाकं करोतु' इति सूचितवान्। यदा सा मीनं कर्तितवती तदा मीनस्य उदरतः एकम् अङ्गुलीयकं बहिः आगतम्। एतत् दृष्ट्वा सन्तुष्टौ तौ दम्पती आलोचितवन्तौ– "एतस्य विक्रयणेन यथेष्टं धनं प्राप्तुं शक्नुमः" इति।



धीवरः अङ्गुलीयकस्य विक्रयणार्थं स्वर्णकारस्य आपणं गतवान्, अङ्गुलीयकं प्रदर्शितवान् च। परीक्षणेन तेन स्वर्णकारेण ज्ञातं यत् तत् अङ्गुलीयकम् अत्यमूल्यम् इति। एतत्, मीनस्य उदरतः प्राप्तम् इति सः अङ्गीकर्तुं न सिद्धः।

स्वर्णकारः तेन धीवरेण सह महाराजसमीपं गत्वा अङ्गुलीयकं प्रदर्शितवान्। "राजमन्दिरतः एतत् कथमपि एतेन धीवरेण चोरितम्" इति उक्तवन्तः अधिकारिणः। राजा अङ्गुलीयकं परीक्षितवान्।





अङ्गुलीयकस्य दर्शनेन महाराजः दुष्यन्तः शकुन्तलायाः वृत्तान्तं स्मृतवान्। दूर्वाससः शापः अपगतः आसीत्। धीवराय उपायनं दत्तवान् महाराजः। शकुन्तलाविषये आत्मना प्रदर्शितम् अनागरिकं व्यवहारं स्मरन् दुष्यन्तः पश्चात्तापम् अनुभूतवान्।

'शकुन्तला कण्वमहर्षेः आश्रमे स्यात्' इति भावयन् दुष्यन्तः कण्वमहर्षेः आश्रमं प्रति दूतं प्रेषितवान्। तत्र सा नास्ति इति वार्ता तेन प्राप्ता। अनन्तरं सः शकुन्तलायाः अन्वेषणार्थं चतसृषु दिक्षु भटान् प्रेषितवान्।





कुतश्चित् अपि शकुन्तलायाः वार्ताम् अप्राप्नुवन् दुष्यन्तः चिन्ताक्रान्तः जातः। एकदा सः अरण्ये सञ्चारसमये सिंहस्य दन्तान् गणयन्तं कर्णौ लुण्ठयन्तं, केसरान् अकर्षन्तं च कञ्चन सुन्दरं बालं दृष्टवान्। स्तब्धः सः तत्रैव स्थितवान्।

अश्वात् अवतीर्य महाराजः बालकसमीपं गत्वा वार्तालापम् आरब्धवान्। बालस्य मधुराणि वचनानि श्रुत्वा सः अतीव सन्तुष्टः। बालः तस्य हस्तं गृहीत्वा आकर्षन् तं स्वनिवासं नीतवान्।





पितुः हस्तं गृहीत्वा आश्रमस्य द्वारे स्थितं स्वपुत्रं भरतं दृष्टवती शकुन्तला। स्वनेत्रयोः एव तस्याः विश्वासः नास्ति! दुःखेन आनन्देन च अश्रूणि स्रावितवती सा। दूर्वाससः शापेन एव एषः मां विस्मृतवान् आसीत् इति अंशं सा स्मृतवती।

अनन्तरं शकुन्तलायाः जीवने सर्वे क्षणाः सन्तोषदायकाः एव। सा दुष्यन्तेन हस्तिनापुरीं नीता। तया महाराज्ञीपदवी अलङ्कृता। शकुन्तलायाः आगमनेन दुष्यन्तः द्विगुणितोत्साहः जातः। प्रजारञ्जकः सन् सः धर्मेण राज्यं परिपालितवान्।





पितुः मरणस्य अनन्तरं भरतः सिंहासनम् आरूढवान्। योग्येन क्रमेण राज्यं परिपालितवान्। सर्वे राजानः तस्य चक्रवर्तित्वम् अङ्गीकृत्य आदरेण व्यवहृतवन्तः। एतेन भरतेन अस्माकं देशः पालितः इत्यतः एतस्य देशस्य नाम 'भारतम्' इति जातम् इति अभिज्ञाः वदन्ति।

—(समाप्तम्)



# चतुरा वृद्धा

देवपुरे सीतारामः नाम कश्चन पण्डितः आसीत्। सः स्वसमीपम् आगतान् शिष्यान् पाठयन् तैः दत्तया गुरुदक्षिणया तृप्त्या जीवति। पञ्चशतं रूप्यकाणि तेन सञ्चितानि आसन् अपि।

एकदा काश्यां प्रचलिष्यमाणायां विद्वत्सभायां भागग्रहणार्थं सीतारामेण आह्वानं प्राप्तम्। सः काशीं गन्तुं सिद्धः जातः। किन्तु धनं कुत्र स्थापनीयम् इति समस्या। गृहे स्थापनं पत्नी न अङ्गीकरोति। "धनं नाम अपायकरं तत्। अतः धनस्य रक्षणं सर्वथा न शक्यते" इति वदति सा।

'एवं तर्हि धनं कस्य अधीने स्थापनीयम्?' इति आलोचयन् सीतारामः आपणिकस्य नागपतेः समीप गतवान्। पृष्टवान् च– "भवान् मम साहाय्यं कर्तुम् अर्हति वा? कस्य समीपे स्थापितं चेत् धनं सुरक्षितं तिष्ठेत्?" इति।

"श्रीमन्! धनविषये सर्वे प्रमाद्यन्ति एव। कुबेरः अपि अत्र अपवादाय न भवेत्। यतः तत् तथा लोभं जनयति" इति उक्तवान् नागपतिः।

तयोः वार्तालापसमये काचित् वृद्धा आगत्य घृतं क्रीतवती। कर्मकरः घृतं दत्त्वा तया दत्तं धनं स्वीकृत्य तां प्रेषितवान्।

तदा तया दत्तं धनं गणयन् नागपतिः– "भोः दुराचारिन्! तस्याः सकाशात् एकम् आणकम् अधिकं स्वीकृतवान् खलु? न्याय्यस्य लाभस्य अपेक्षया अधिकम् एका वराटिका अपि न स्वीकरणीया इति न जानाति वा भवान्? एतद्विषये कियद्वारं मया बोधितम् इति स्मरतु। तथापि भवान् एवम् आचरति खलु? पुनः यदा सा आगमिष्यति तदा एकम् आणकं प्रत्यर्पयतु। इतः परम् एवम् आचरति चेत् भवन्तम् उद्योगात् निष्कासयिष्यामि" इति तर्जितवान्।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



एतां घटनां प्रत्यक्षं दृष्टवान् सीतारामः नागपतेः प्रामाणिकतायां परमविश्वासं प्राप्तवान्। गृहं प्रतिगतः सः धनेन सह नागपतेः गृहं गतवान्। नागपतिम् उक्तवान् च— "भोः, एतत् मया सञ्चितं धनम्। यावत् अहं काशीतः प्रत्यागमिष्यामि तावत् एतस्य रक्षणभारः भवतः" इति।

"हा हन्त! किम् एतत्! अन्यस्य धनम् अहम् अङ्गुल्या अपि न स्पृशामि। अन्यत्र कुत्रापि भवता स्थानं न प्राप्तं चेत् मम गृहे भवान् एव भूमौ गर्ते स्थापयित्वा गर्तं मृत्तिकया प्रपूर्य गच्छतु। प्रत्यागमनानन्तरं ततः स्वयं नयतु च" इति उक्तवान् नागपतिः।

'अहो सौजन्यं निर्लोलुपता च नागपतेः!' इति आत्मनि एव उद्गारं प्रकटयन् सीतारामः एकत्र गर्तं कृत्वा धनपात्रं गर्ते स्थापयित्वा गर्तं मृत्तिकया प्रपूर्य, तत्स्थलं सम्यक् निरीक्ष्य नागपतिं कृतज्ञतावचनानि उक्त्वा ततः गतवान्।

अनन्तरं सीतारामः निश्चिन्ततया काशीं गत्वा विद्वत्सभायां भागं निरुह्य ग्रामं प्रत्यागतवान्। तद्दिने एव नागपतेः गृहं गत्वा उक्तवान्— "मम धनम् अहं नेष्यामि" इति।

"अवश्यं नेतुम् अर्हति भवान्। यत्र तत् स्थापितं तत् स्थानं सम्यक् स्मरति खलु भवान्?" इति पृष्टवान् नागपतिः।

यदा सीतारामः यत्र धनं स्थापितम् आसीत् तत् स्थलं खनितवान् तदा तत्र धनं न आसीत्। सीतारामः एतं विषयं नागपतिं निवेदितवान्। "भवतः धनस्य विषये अहं किं वदामि? भवता एव तत् स्थापितम्। अहं तु न दृष्टवान् एव" इति उक्तवान् नागपतिः।

'अहो! वञ्चितः अहम्' इति खेदम् अनुभवन् म्लानवदनः सीतारामः मन्दं स्वगृहं प्रति प्रस्थितवान्।

मार्गे मिलिता सावित्री नाम वृद्धा सीतारामं पृष्टवती— "भोः, सीताराम! काशीतः कदा प्रत्यागतवान्? सर्वं कुशलं खलु? मुखे किमर्थं म्लानता? का चिन्ता भवतः?" इति।

सीतारामः प्रवृत्तं समग्रं निवेदितवान्। तदा वृद्धा सावित्री क्षणकालम् आलोच्य— "शठं प्रति शाठ्यम् एव प्रयोक्तव्यम्। अहं

नागपतितः सर्वं धनं ·दापयिष्यामि" इति उक्त्वा एकम् उपायं सूचितवती। तदनुगुणं कर्तुं सीतारामः सिद्धः जातः।

किञ्चित्कालानन्तरं सावित्री कानिचन आभरणानि वस्त्रेण बद्ध्वा नागपतेः गृहं गतवती। नागपतिम् उक्तवती च– "भोः, मम पुत्रः विद्याभ्यासार्थं दशभ्यः वर्षेभ्यः पूर्वं काशीं गतवान्। अद्यावधि न प्रत्यागतः। अहं तु वृद्धा खलु? मरणं प्रतीक्षमाणा दिनानि गणयन्ती अस्मि। काशीं गत्वा पुत्रस्य अन्वेषणं करणीयम् इति मम विचारः। मम समीपे तु कष्टेन आर्जितानि द्विसहस्ररूप्यकमूल्यात्मकानि आभरणानि सन्ति। आत्मना सह यदि तानि नयेयं तर्हि तानि चोरैः वशीक्रियेरन्। भवान् तु धर्मात्मा, भवतः गृहे एव मद्धनं स्थापितम् अस्ति इति काशीगमनतः पूर्वं माम् उक्तवान् आसीत् सीतारामः। परद्रव्यं लोष्ठवत् पश्यति इति भवतः कीर्तिः मया अपि श्रुता एव। एतानि आभरणानि भवान् स्वसमीपे स्थापयति वा? काश्यां यदि मम मरणं भवेत्, तदनन्तरं वर्षत्रयाभ्यन्तरे मम पुत्रः यदि अत्र आगच्छेत् तर्हि भवान् एतानि तस्मै ददातु। अन्यथा ....।"

तस्याः वचनं तत्रैव स्थगयन् नागपतिः उक्तवान्– "शान्तं पापम्। अमङ्गलं मा वदतु। भवती पुत्रम् अन्विष्य पुत्रेण सहैव प्रत्यागमिष्यति इति मम विश्वासः अस्ति। मम गृहे भवती यत्र इच्छति तत्र तानि आभरणानि स्थापयितुम् अर्हति" इति।



'एतया स्थाप्यमानानि आभरणानि अवश्यं मदधीनानि भविष्यन्ति' इति आलोचयन् नागपतिः अतीव सन्तुष्टः।

अत्रान्तरे सीतारामः तत्र आगत्य उक्तवान्– "क्षाम्यतु नागपतिमहोदय! अस्थाने मया धनपात्रम् अन्विष्टम्। इदानीं वास्तविकं स्थानं स्मृतवान्। तत्र खननं कृत्वा धनं नेष्यामि अहम्" इति।

नागपतिः क्षणकालं स्तब्धः। 'सीतारामस्य धनं मया न प्रत्यर्पितम् इति यदि एषा सावित्री जानीयात् तर्हि एतानि आभरणानि मम गृहे न स्थापयेत्' इति आलोचितवान् सः।

वाचा स्खलन् सः उक्तवान्– "सत्यं सीतारामहोदय! भवतः गमनानन्तरं ममापि स्थलबिषये सन्देहः आगतः। अतः भवता यत्र धनं स्थापितम् आसीत् तत् स्थलं स्मरन् अहम् अपि खननं कृतवान्। तत्र मया भवतः धनं प्राप्तम्। अन्तः तत् स्थापितवान् अस्मि। आनयामि" इति।

अनन्तरम् अन्तः गत्वा पञ्च शतं रूप्यकाणि आनीय सीतारामाय दत्तवान्।

तदा सावित्री तत्क्षणे एव सीतारामं पश्यन्ती इव अभिनयन्ती उक्तवती– "सीताराम! कदा आगतवान्? काश्यां मम पुत्रः भवता दृष्टः वा? तस्य अन्वेषणार्थम् इदानीं मया स्वयं प्रस्थितम् अस्ति" इति।

"मातः! किमर्थं गमनम्? सः एव द्वित्रेषु दिनेषु अत्र आगमिष्यति। मां देवपुरीयं ज्ञात्वा सः अतीव सन्तुष्टः। भवत्याः कुशलवार्तां सः बहुधा पृष्टवान्" इति उक्तवान् सीतारामः।

"हा हन्त! देवो दयालुः। एवं तर्हि इदानीं मया काशीं प्रति गन्तव्यं नास्ति। यदि विश्वनाथस्य दर्शनभाग्यं मम स्यात् तर्हि पुत्रेण सह एव गच्छेयम्" इति वदन्ती नागपतिं दृष्ट्वा– "न्यासरूपेण आभरणस्थापनं तु नास्ति श्रीमन्" इति उक्त्वा सीतारामेण सह प्रस्थितवती सावित्री।

एतत् दृष्टवतः नागपतेः मुखम्लानतां किमिति वर्णयेम?






तस्मिन् वर्षे समीचीना वृष्टिः जाता। गावः सन्तोषं प्राप्तवत्यः। फलसमृद्धिः सम्यक् अस्ति इति कारणतः सर्वे जनाः अपि सन्तुष्टाः।

हरिद्वर्णीयैः तरुलतादिभिः तृणैः च भूमिः हसन्ती इव दृश्यते स्म। परमा समृद्धिः दृष्टा अस्ति अस्मिन् वर्षे। अतः सर्वत्र सन्तोषतरङ्गाः व्याप्ताः सन्ति।

वर्षाकालानन्तरं शरदृतुः आगता। नन्दगोपादयः परस्परं समालोच्य निश्चितवन्तः यत् समृद्धिः या प्राप्ता तस्याः कृतज्ञतारूपेण इन्द्रोत्सवः करणीयः इति। इन्द्रः तर्पणीयः इति तेषां सङ्कल्पः आसीत्। अतः ते इन्द्रोत्सवं सवैभवम् आचरितुं सन्नाहम् आरब्धवन्तः। सर्वे जनाः इन्द्रोत्सवाङ्गतया करणीयेषु भिन्नभिन्न-कार्येषु व्यापृताः अभवन्।

तेषां सन्नाहं दृष्ट्वा कृष्णः पृष्टवान्– "किंनिमित्तम् एषः सन्नाहः? तादृशः कः उत्सवः सन्निहितः? किंनामकः सः उत्सवः? कस्य प्रीत्यर्थं तस्य आचरणम्? प्रीतः सः देवः कीदृशम् उपकारं कुर्यात्?" इति।

तदा गोपवृद्धेषु अन्यतमः अग्रे आगत्य उक्तवान्– "कृष्ण! लोकपालानां राजा इन्द्रः एव खलु? वर्षर्तोः अधिपतिः अपि इन्द्रः एव। वृष्टिकारकः अस्मिन् वर्षे वृष्टिं सम्यक् कारितवान्, येन गोगणादयः परमसन्तुष्टाः। गोपानां धनं तु गावः एव। अतः भाग्यदातारम् इन्द्रं पूजयितुं वयम् इन्द्रोत्सवम् आचरन्तः स्मः। इन्द्रोत्सवस्य आचरणं न्याय्यम् अपि"



इति।

तदा कृष्णः उक्तवान्– "मानवानां तिस्रः वृत्तयः-कृषिः, गोरक्षणं, वाणिज्यं च इति। ये यया वृत्त्या जीवन्ति तेषां देवः सा वृत्तिः एव। वयं गोपालकाः पर्वतादिषु निवसामः। पर्वतादिषु सञ्चरन्तः पशुचारणं कर्मः। अतः पर्वताः धेनवश्च अस्माकं देवताः। तासां पूजनम् एव युक्तम्। कृषिप्रधानाः कृषिकाः ग्रामे निवसन्ति। मृगयाजीविनः व्याधाः अरण्ये निवसन्ति। गोधनाः वयं पर्वतसमीपे निवसामः। ब्राह्मणानां यज्ञः यथा तथा कृषिकाणां हलपूजा भवति।अस्माकं तु पर्वतपूजा एव युक्ता। अतः अस्माभिः पर्वतोत्सवः आचरणीयः, न तु इन्द्रोत्सवः वर्षणव्यवस्था इन्द्रस्य कर्तव्यम्। तच्च तेन पालितम्। कर्तव्यपालनम् इन्द्रेण यदा क्रियते तस्मिन् वर्षे समीचीना वृष्टिः भविष्यति। इतः पूर्वम् एतादृशी वृष्टिः न जाता इत्यस्य अर्थः इन्द्रः कर्तव्यपालनं न कृतवान् इत्येव। अतः इन्द्रोत्सवः व्यर्थः। अहं कृष्णः वदामि– अस्माभिः पर्वतोत्सवः आचरणीयः, न तु इन्द्रोत्सवः" इति।

एवं कृष्णेन सुदीर्घं बोधनं यदा कृत तदा गोपाः तदीयं वचनम् अङ्गीकृतवन्तः। अन्यच्च कृष्णस्य वचनं तिरस्कर्तुं कस्यापि मनः धैर्यं वा नास्ति। कृष्णेन कृतानि बहूनि अद्भुतकार्याणि तैः दृष्टानि सन्ति। बहुवारं कृष्णः तान् अपायात् रक्षितवान् अपि। अतः कृष्णं विना अन्या गतिः नास्ति इति तैः अङ्गीकृतम् आसीत्। केचन तु भावयन्ति स्म यत् कृष्णः न मानवः, अपि तु साक्षात् देवः एव इति। कृष्णः गोपालकानां हितम् एव चिन्तयति इत्यत्र तेषां परमविश्वासः आसीत्।

अतः गोपाः इन्द्रोत्सवस्य विचारं परित्यज्य पर्वतोत्सवार्थं सन्नाहम् आरब्धवन्तः। अर्चकान् आहूय पूजा-सामग्रीणां सङ्ग्रहं कृतवन्तः। पर्वतोत्सवार्थं विविधानि पायसानि, अपूपाः लड्डुकाः षष्कुल्यः च निर्मिताः। गोवर्धनपर्वतस्य पूजा करणीया इति तैः निश्चितम् आसीत्।

गोपाः चित्रान्नलेह्यादीन् मधु- दधि- घृत-

क्षीरादीन् च यथाशक्ति सङ्गृह्य आवृद्धं सर्वे गोपाः विविधानि वाद्यानि वादयन्तः गायन्तः नृत्यन्तः उत्प्लवमानाः च शोभायात्रारूपेण गोवर्धनपर्वतं प्रति प्रस्थितवन्तः।

सर्वेषां पुरतः अर्चकाः पर्वतस्य स्तोत्रं कुर्वन्तः सगम्भीरं गच्छन्तः आसन्।

गोवर्धनपर्वतस्य मूले कश्चन प्रशस्तः प्रदेशः गोमयेन उपलिप्तः, सुन्दरीभिः रङ्गवल्लीभिः अलङ्कृतः च आसीत्। तत्र उन्नते पीठे कृष्णः तैः उपवेशितः। अनन्तरं पर्वतपूजा प्रवृत्ता।

तैः आनीतानि सर्वाणि भक्ष्यादीनि नैवेद्यरूपेण समर्पितानि। घण्टानादपूर्वकं विविधवाद्यवादनपूर्वकं च नीराजनं प्रवृत्तम्। अर्चकाः मन्त्रं पठन्तः प्रदक्षिणनमस्कारान् कृतवन्तः। सर्वे जनाः भक्त्या पूजां पश्यन्तः आसन्।

यदा सर्वे पूजाकर्मणि निमग्नाः आसन् तदा कृष्णः पर्वताधिदेवरूपेण पर्वताग्रे प्रत्यक्षम् अभवत्।

सर्वेषु आश्चर्येण भक्त्या च पश्यत्सु सः नैवेद्य स्वीकृतवान्।

तान् उद्दिश्य उक्तवान् च— "गोपबान्धवाः! भवतां भक्त्या अहं परमसन्तुष्टः अस्मि" इति।

तदा सर्वे गोपाः नमस्कृत्य उक्तवन्तः— "भोः देव! वयं सर्वे भवतः दासाः। भवतः आज्ञां शिरसा पालयिष्यामः। अस्मासु भवतः



कृपादृष्टिः सदा भवेत्। भवान् यथा आदिशति तथा कर्तुं वयं सिद्धाः" इति।

"भोः शृण्वन्तु। इतः परं भवन्तः पर्वतरूपिणं माम् एव पूजयन्तु। तेन भवतां गावः अमृततुल्यं क्षीरं यथेष्ट स्रावयिष्यन्ति। भवताम् इष्टार्थसिद्धिः अपि भविष्यति। अहं कामरूपः सन् भवत्सु अन्यतमत्वेन सदा तिष्ठामि" इति उक्त्वा पर्वतदेवः अदृश्यतां गतः।

गोपाः पर्वतस्य उपरि स्थितम् अधः उपविष्टवन्तं च कृष्णं युगयत् एव दृष्ट्वा पुनः पुनः नमस्कारं कृतवन्तः। अनन्तरं विविधैः पुष्पैः गवाम् अलङ्कारं कृत्वा ताः पूजितवन्तः।



तासां कण्ठेषु किङ्किणीः बद्ध्वा लतादिभिः ताः अलङ्कृत्य 'हो हो!' इति सन्तोषेण उद्गारं प्रकटयन्तः पर्वतं प्रदक्षिणीकृतवन्तः। गाः क्रीडयन्तः वाद्यानि वादयन्तः स्वयम् अपि क्रीडितवन्तः।

एतत्सर्वं समाप्य शिष्टानि भक्ष्याणि प्रसादरूपेण भक्त्या खादितवन्तः। उत्साहेन सन्तोषेण तृप्त्या च तद्दिनं यापितम् अभवत्। दिनान्ते ते सर्वे कृष्णेन सह गोकुलं प्रत्यागतवन्तः।

स्वर्गलोकस्थेन इन्द्रेण एषा वार्ता आद्यन्तं श्रुता। सः आत्मानम् अपमानितं मन्यमानः गोपानां विषये नितरां क्रुद्धः अभवत्। कोपाग्निना ज्वलन् सः संवर्तादीन् महामेघान् आहूय– "भवन्तः पश्यन्तः सन्ति खलु - ते गोपाः अहङ्कारसम्पनाः जाताः। एतावत्पर्यन्तं ते मम पूजां कुर्वन्तः आसन्। अस्मिन् वर्षे कपटिनः कृष्णस्य वचनं पुरस्कृत्य मम पूजां परित्यज्य शिलामयस्य पर्वतस्य पूजां कृतवन्तः। एतेन एव सर्वेष्टसिद्धिः इति तेषां मनसि भ्रमः अस्ति। अतः भवन्तः सप्त दिनानि यावत् धाराकारेण वर्षन्तु। तेषां जीवनाधारभूताः गावः क्लेशनीयाः। सर्वे सम्यक् पीडनीयाः च। तदा एव ते विवेकं प्राप्नुयुः। अहम् अपि भवद्भिः सह आगमिष्यामि। ते किं वा कुर्युः इति प्रत्यक्षं द्रक्ष्यामि च" इति उक्तवान्।

गोकुले अकस्मात् महान् घर्मः आरब्धः। जनानां शरीरतः स्वेदधारा प्रवहति। महत्याः वृष्टेः लक्षणम् एतत् इति अनुभविनः वृद्धाः उक्तवन्तः।

अल्पे एव काले ईशान्यदिशि तडितः दृष्टाः। तेनैव सह मेघगर्जनं श्रुतम्। महान् वायुः ततः आगतः। कृष्णमेघाः आकाशे दृष्टाः।

'अकाले किम् एतत् वर्षणम्' इति उद्गारं प्रकटितवन्तः वृद्धाः।

क्रमशः कालमेघाः आकाशे व्याप्ताः अभवन्। सूर्यः सम्पूर्णतः मेघैः आच्छन्नः। तीक्ष्णाः तडितः, घोरः अशनिः च पुनः पुनः प्रवृत्ताः। वर्षोपलसहिता धारावृष्टिः जाता। आरब्धायाः वृष्टेः स्थगनस्य चिह्नम् एव न



दृश्यते।

अदृष्टपूर्वाम् एतां महावृष्टिं दृष्ट्वा गोपाः सर्वे भीताः। प्रलयकालः सन्निहितः इति ते भावितवन्तः। जीवरक्षणं कथम्? कुत्र वा गन्तव्यम्? इति चिन्तयन्ति ते। पशूनाम् अपि शोचनीया स्थितिः। महाकारकाः वृक्षाः अपि आधारशैथिल्यात् कम्पमानाः सन्ति। अशीनपातात् केचन वृक्षाः सम्पूर्णं दग्धाः। केचन वृक्षाः प्रवाहेण बलात् नीताः। एवम् अरण्ये वर्णयितुम् अशक्यः उत्पातः संवृत्तः। असङ्ख्याः पक्षिणः प्राणान् त्यक्तवन्तः। सर्पादयः भीत्या मतिभ्रान्ताः इव इतस्ततः सञ्चरन्ति।

मानवानां स्थितिः अपि शोचनीया एव। कुटीराः पतिताः। शकटानि भग्नानि। केषाञ्चित् धेनवः प्रवाहेण नीताः। धान्यसम्पत्तिः नष्टा। क्षेत्रे आरोपितानि सस्यानि अपि नष्टानि। सर्वत्र मानवानां पशूनां च धावनम् आक्रन्दनं च श्रूयते।

गोपाः सर्वे आर्तस्वरेण कृष्णं प्रार्थयन्ति– "कृष्ण! अस्मान् रक्षतु। शरणागतवत्सल! आर्तरक्षक! भवन्तं विना नान्या गतिः अस्माकम्" इति।

'एतत्सर्वम् इन्द्रेण प्रेरितम्। इन्द्रोत्सवं परित्यज्य पर्वतोत्सवः कृतः इति कुपितः सः एवं कुर्वन् अस्ति। एवं कृतं चेत् कृष्णः अहम् असहायः भविष्यमि इति सः चिन्तयति। असूयया सः अविवेकी इव व्यवहरन् अस्ति' इति आलोचितवान् कृष्णः।

गोपानां रक्षणं कर्तुम् इच्छन् सः गोवर्धनपर्वतसमीपं गतवान्। तं पर्वतं लीलया उन्नीय छत्ररूपेण गृहीतवान्।

एवम् उन्नयनात् जातेन कम्पनेन पर्वतस्थाः महाशिलाः सशब्दं पतिताः। वृक्षा केचन धराशायिनः जाताः। गुहायां स्थिताः व्याघ्रसिंहादयः सर्पनकुलादयः च वसतिं त्यक्त्वा बहिः आगतवन्तः। पर्वते निवसन्तः विद्याधरादयः यक्षकिन्नरादयः च आकाशं प्रति उत्पतितवन्तः। तपसि लीनानां मुनीनां तपसः भङ्गः जातः।

कृष्णः सर्वान् गोपान् आह्वयन् उक्तवान्– "भो भोः गोपाः! पशुभिः सह

भवन्तः अत्र आगच्छन्तु। अत्र वृष्टितः कापि भीतिः न भविष्यति" इति।

ते गोपाः स्वकीयैः वस्तुभिः सह पत्नीपुत्रादीन्, शकटानि, धेनूः, वृषभतर्णकादीन् च आनीय पर्वतस्य अधः आगत्य स्थितवन्तः।

सप्तदिनानां वर्षणस्य अनन्तरम् इन्द्रः मेघैः सह प्रतिगतवान्। आकाशः निर्मलः जातः। सूर्यकिरणाः यथापूर्वं प्रसृताः। गोपाः स्ववस्तुभिः सह पूर्वतनं निवासं प्रति गतवन्तः।

कृष्णः गोवर्धनपर्वतं यथास्थानं स्थापितवान्। गोपानां मुखे हासं दृष्ट्वा तृप्त्या निःश्वसिहवान् च।



कृष्णेन कृतम् अपूर्वं कार्यं दृष्ट्वा निर्विकारतया स्थातुं न शक्तवान् इन्द्रः। तस्य मनसि अव्यक्ता भीतिः कश्चन सङ्कोचः च आसीत्।

अतः सः ऐरावतम् आरुह्य कैश्चित् देवैः सह कृष्णस्य समीपं गतवान्। गोवर्धनपर्वतस्य उपरि स्थितं कृष्णं भगवन्तं मन्यमानः मौनेन नमस्कृतवान्।

कृष्णः इन्द्रस्य आगमनं जानन् अपि अजानन् इव कुत्रापि पश्यन् मौनम् उपविष्टवान्।

कृष्णस्य कोपं जानन् इन्द्रः विविधैः स्तोत्रैः कृष्णस्य स्तुतिं कृतवान्। 'गोपालकवेषेण स्थितं भवन्तं सर्वेश्वरः इति अजानन् मदान्धः अहम् अपराधं कृतवान्' इति वदन् पुनः पुनः क्षमां प्रार्थितवान्।

दिव्यानि वस्त्राभरणादीनि तस्मै समर्प्य इन्द्रः कृष्णम् एवम् उक्तवान्– "कृष्ण! कंसपक्षपातिनः इतोऽपि बहवः राक्षसाः भवतः अहितं चिन्तयन्तः सन्ति। ते भवतः हस्तेन एव मृताः भविष्यन्ति। कंसम् अपि मारयन् भवान् लोकविख्यातः भविष्यति। भवतः मातुलानी कुन्तीदेवी धर्मराजं भीमं च प्रसूय मम अनुग्रहेण अर्जुनं प्रसूते। सः भक्तरूपेण भवतः सेवां करिष्यति। भवान् तं वात्सल्येन पश्यतु। भवत्कारणतः तेन कीर्तिः प्राप्यते। अग्रे कौरवपाण्डवानां युद्धं भविष्यति। तस्मिन् युद्धे असङ्ख्याः राजानः

भागं ग्रहीष्यन्ति। अन्ते तत्र पाण्डवानाम् एव जयः भविष्यति। भवता सदा अर्जुनस्य हितं चिन्तनीयम्। एषा एव मम विनम्रा प्रार्थना" इति।

तदा कृष्णः मन्दहासपूर्वकम् उक्तवान्– "देवेन्द्र! भवता यथा उक्तं, मम मातुलान्याः पुत्राः पञ्च अपि महापराक्रमिणः एव। ते देवांशात् जाताः। कालान्तरे ते एव समग्रस्य भूमण्डलस्य अधिपाः भविष्यन्ति। तेषु अन्यतमः अर्जुनः तु अप्रतिमशूरः। एतत्सर्वम् अहं जानामि एव। भवतः आगमनेन, प्रार्थनेन, स्तोत्रेण च अहं सन्तुष्टः अस्मि। इतः परं भवान् निश्चिन्ततया स्वर्गं प्रतिगन्तुम् अर्हति। समये समये वृष्टिः यथा भवेत् तथा करणं भवतः कर्तव्यम्। तत् स्मारयितुम् इच्छन् एव अहम् अस्मिन् वर्षे इन्द्रोत्सवं निवारितवान्। 'कर्तव्यपालनसन्दर्भे प्रतिफलस्य अपेक्षा न करणीया' इति नीतिः भवता सम्यक् ज्ञाता इति अहं भावयामि। अहं सन्तुष्टः अस्मि" इति।

इन्द्रः प्रदक्षिणपूर्वकं साष्टाङ्गनमस्कारं कृत्वा ऐरावतम् आरुह्य देवैः सह सन्तोषेण स्वर्गं गतवान्। कृष्णः अपि गोकुलं प्रति प्रस्थितवान्।

कृष्णस्य आगमनं ज्ञात्वा सर्वे गोपप्रमुखाः तं परितः स्थितवन्तः। कृष्णः सामान्यः मानवः न इति सत्यं तैः एतावता ज्ञातम् आसीत्।

अतः ते कृष्णम् उक्तवन्तः– "भोः कृष्ण! वस्तुतः अपि भवान् कः? लोकरक्षकः इव सदा जागरूकतया व्यवहरति। एवं चेत् गोपालकः इव किमर्थं तिष्ठति? भवतः नैजं रूपं प्रदर्शयतु। भवतः अपूर्वं सामर्थ्यं दृष्ट्वा कदाचित् वयं भीताः भवामः अपि" इति।

तदा कृष्णः हसन् उक्तवान्– "अहं तु भवन्तः इव कश्चन सामान्यः मानवः एव खलु? किमर्थं तत्र वृथा सन्देहः चर्चा वा?" इति।

कृष्णस्य हासेन प्रीतिपूर्णेन वचनेन च सर्वे समाहिताः सन्तुष्टाः च अभवन्।






# प्रामाणिकता

जगन्नाथः उमापतिः च सहैव गच्छन्तौ आस्ताम्। उभौ अपि षष्टिवर्षीयौ। यदा रामनगरम् अतिक्रान्तं तदा अकस्मात् झञ्झावातः आरब्धः। महती वृष्टिः अपि आरब्धा। इदानीं कुत्र स्थातव्यम् इति तौ इतस्ततः दृष्टवन्तौ। तदा ताभ्याम् एकः शिथिलः देवालयः दृष्टः। धावन्तौ तौ तं देवालयं प्रविष्टवन्तौ। तत्र अश्रूणि स्रावयन्ती कोणे उपविष्टा काचित् युवतिः ताभ्यां दृष्टा।

तां दृष्ट्वा आश्चर्यचकितौ तौ पृष्टवन्तौ– "भगिनि! वृष्टिः क्षणे क्षणे वर्धमाना अस्ति। भवती कथम् एकाकिनी अत्र आगता?" इति।

एतस्य उत्तरं वक्तव्यं वा न वा इति क्षणकालं सा आलोचितवती। अन्ते उक्तवती च– "जीवने मम जुगुप्सा आगता अस्ति। आत्महत्या करणीया इति आलोच्य अहम् अन्तःपुरतः पलाय्य आगतवती! एतन्मध्ये वृष्टिकारणतः अत्र उपविष्टा अस्मि च" इति। एवं कथनसमये तस्याः नेत्राभ्याम् अश्रुधारा प्रवहति स्म।

तस्याः वृत्तान्तं श्रुतवतोः तयोः मनसि करुणा उत्पन्ना। उमापतिः तां पृष्टवान्– "अन्तःपुरीया वा भवती? तादृशी का कष्टपरिस्थितिः आगता येन भवत्या आत्महत्यार्थं सङ्कल्पः कृतः?" इति।

सा क्षणकालं शिरः अवनमय्य स्थित्वा उक्तवती– "महाराजः राज्ञी च मम विवाहं कर्तुम् इच्छतः। शिवानन्दनामकस्य कृषिकस्य पुत्रः वरः भवतु इति तयोः विचारः। अहं तु तं परिणेतुं न इच्छामि। मम निराकरणम् अहं महाराजम् एकान्ते निवेदितवती। तदा महाराजेन अहं बोधिता यत् भवती शिवानन्दस्य ऋणे अस्ति, अतः



यमस्य अपि अप्रियौ आवां न मृतौ। भवत्याः हितं किमपि संसाध्य पापभारः न्यूनीकरणीयः इति उद्देशेन ग्रामं प्रति प्रस्थितवन्तौ। अस्माकं सौभाग्येन भवती मध्येमार्गं प्राप्ता'' इति उक्तवान् जगन्नाथः।

''यदि शिवानन्दः आवां न निवारितवान् स्यात् तर्हि भवती आवाभ्यां मारिता अभविष्यत्। दैववशात् तादृशं क्रूरं कार्यं न घटितम्'' इति पश्चात्तापयुतेन स्वरेण उक्तवान् उमापतिः।

''शिवानन्दविषये महाराजः महत् गौरवं प्रकटयति। भवन्तौ अपि तद्विषये तथैव व्यवहरतः। किं श्रेष्ठत्वम् आसीत् तस्य?'' इति कुतूहलेन पृष्टवती प्रमीळा।

तदा जगन्नाथः प्रवृत्तं निवेदितवान्— ''भूस्वामी रङ्गनाथभूपतिः केनापि घोरव्याधिना पीडितः जातः। वैद्यस्य औषधोपचारः निष्फलः अभवत्। तदीयः अन्तिमः क्षणः सन्निहितः। तस्य पत्नी तु बहुपूर्वम् एव दिवङ्गता आसीत्। बन्धुषु तस्य विश्वासः नास्ति। अतः सः षड्वर्षीयायाः भवत्याः रक्षणदायित्वं आवयोः उपरि स्थापितवान्। आवां तस्य विश्वासपात्रभूतौ आस्ताम्। यावत् मम पुत्री प्राप्तवयस्का न भविष्यति तावत् सम्पत्तेः रक्षणं भवतोः एव कार्यम् इति उक्त्वा, आवयोः अङ्गीकारेण मनःसमाधान प्राप्य सः प्राणान् त्यक्तवान्।

तदीयस्य पुत्रस्य परिणयः एव धर्मः इति। भूस्वामिनः अद्वितीया पुत्री अहं सामान्यस्य कर्मकरस्य पुत्रेण कथं वा परिणीता भवेयम्? अतः एव आत्महत्यार्थम् अत्र आगतवती'' इति।

''अहो! भूस्वामिनः रङ्गनाथभूपतेः पुत्री प्रमीळा भवती एव वा? इदानीं तु भवती प्रवृद्धा अस्ति। अतः आकारेण किं, स्वरेण अपि परिचयः न प्राप्तः। आवां कौ इति भवती न जानाति। भवत्याः मारणार्थं प्रयत्नं कृत्वा कारागारं प्रविष्टवन्तौ दुष्टौ आवाम्। अद्य एव आवयोः विमोचनं जातम्। षड्वर्षात्मकेन कारागारवासेन दण्डितौ आस्ताम् आवाम्। कृतस्य पापस्य विषये एव चिन्तयन्ती मम पत्नी भद्रा मरणं गतवती।

अनन्तरं सप्ताहाभ्यन्तरे एव अहं मम पत्न्या भद्रया सह भवत्याः गृहं प्रविष्टवान्। तत्रैव मम वासः निश्चितः। भवती मारिता चेत् समग्रा सम्पत्तिः मंदधीना भविष्यति इति दुरालोचना मम मनसि आगता। 'दिवान'पदव्यां स्थितः एषः उमापतिः 'अत्र साहाय्यं करोमि' इति आश्वासनं दत्तवान्। विविधाः पीडाः भवत्यै दत्ताः। भवत्याः मरणं सहजम् इव भासेत इति अस्माकं यत्नः आसीत्।




अस्माकम् एषा दुरालोचना शिवानन्देन कथञ्चित् ज्ञाता। अतः सः भवत्याः रक्षणे अतीव जागरूकः तिष्ठति स्म। अत्रान्तरे रङ्गनाथभूपतेः आप्तः राजा श्रीवर्धनः देशाटनं कुर्वन् अस्मत्प्रान्तम् अपि आगतवान्।

तत्समये भवती उत्तमाहाराभावात् कान्तिहीना दृश्यते स्म। राज्ञः आगमनं ज्ञात्वा मम पत्नी भद्रा त्वरया तैलाभ्यञ्जनं कारयित्वा उत्तमानि वस्त्राणि धारितवती। सम्यक् अलङ्कृत्य भवत्यै भक्ष्यादीनि अपि दत्तवती।

महाराजः भवत्याः गृहम् आगत्य भवतीं पृष्टवान्– "किं भोः प्रमीळे! अपि कुशलम्? भवत्याः पित्रा नियुक्ताः एते संरक्षकाः योगक्षेमं सम्यक् पश्यन्ति खलु?" इति।

तत्समये मम पत्नी भद्रा भवत्याः पुरतः स्थितायाः जवनिकायाः पृष्ठतः स्थित्वा नेत्राभ्यां भवतीं भाययन्ती आसीत्। तथापि भवती अश्रूणि स्रावयन्ती धैर्येण उक्तवती एव– "महाराज! भवतः आगमनकारणतः मया उत्तमानि वस्त्राणि दृष्टानि। समीचीनं भोजनं कृतम्। अन्यथा तु प्रतिदिनं कदन्नं मलिनवस्त्रं च" इति।

राजा मां, मम पत्नीं, मित्रम् उमापतिं च आहूय सम्यक् तर्जयित्वा हितं चापि उपदिश्य राजधानीं प्रतिगतवान्।

एतेन कुपिता मम पत्नी भवतीं प्रकोष्ठे स्थापयित्वा मरीचिकाधूमं प्रसारितवती। द्वारं कीलयित्वा शयनं कृतवती च। प्रातःकाले भवती मूर्च्छिता आसीत्। प्रातः कार्यार्थम् आगतः शिवानन्दः प्रथमोपचारेण



भवतीं सचेतनां कृतवान्।

तदा भवती रुदती तम् उक्तवती– "कृपया मां भवान् स्वगृहं नयत्। एते दुष्टाः माम् अत्र मारयन्ति" इति।

दिनद्वयानन्तरम् अहं शिवानन्दम् आहूय उक्तवान्– "भोः, प्रमीळा अस्वस्था अस्ति। ह्यः वैद्येन परीक्षा कृता। तेन उक्तं यत् औषधं सज्जीकृत्य स्थापयिष्यामि इति। भवान् तस्य गृहं गत्वा तत् औषधम् आनयत्" इति।

शिवानन्दः वैद्यसमीपं गतवान्। वैद्येन दत्ताः गुलिकाः स्वीकृतवान्। गुलिकानां विषये तस्य सन्देहः उत्पन्नः। अतः सः ताः मार्गे पातयित्वा कूपिकायां शर्करागुलिकाः स्थापयित्वा कूपिकां मम हस्ते दत्तवान्। एतासां गुलिकानां सेवनेन भवत्यां कोऽपि विकारः न उत्पन्नः। इदानीं दुरालोचना कृतवताम् अस्माकम् आश्चर्यं जातम्।

अनन्तरं वयं कञ्चन मन्त्रवादिनम् आनायितवन्तः। सः रङ्गवल्लीं लिखित्वा पिशाचपूजादिद्रव्याणि सज्जीकृत्य भवतीम् उपवेश्य मन्त्रोक्तां पूजाम् आरब्धवान्। एतत्सर्वं भवत्याः अहितार्थम् एव इत्येतम् अंशं जानन् शिवानन्दः तस्यां रात्रौ भवतीं पार्श्वग्रामस्थे बन्धुगृहे स्थापयित्वा प्रत्यागत्य मौनं शयनं कृतवान्।

प्रातः 'प्रमीळा न दृश्यते' इति वार्ता सर्वत्र प्रसृता। भूस्वामिगृहवासिनां ग्रामीणानां च संशयदृष्टिः मम उमापतेः च उपरि पतिता। दशदिनानाम् अनन्तरम् अपि भवती यदा न दृष्टा तदा ग्रामीणाः केचन महाराजाय एतां वार्तां निवेदितवन्तः।

महाराजः माम्, उमापतिं मम पत्नीं च स्वसमीपम् आनाय्य विचारणां कृत्वा अस्मान् कारागारे स्थापितवान्।

केषाञ्चित् दिनानाम् अनन्तरं शिवानन्दः भवतीं महाराजसमीपं नीत्वा निवेदितवान्– "महाप्रभो! ते दुष्टाः सम्पत्तिनिमित्तम् एतां मारयितुम् उद्युक्ताः आसन्। तेभ्यः एतस्याः रक्षणार्थम् अहम् एतां रहसि स्थापितवान्। एतत् उचितं वा अनुचितं वा इति न जाने। यद्यनुचितं स्यात् तर्हि भवान् योग्येन दण्डेन मां दण्डयितुम् अर्हति" इति।

राजा शिवानन्दमुखात् प्रवृत्तं सर्वं ज्ञात्वा

उक्तवान्– "एतस्याः रक्षणार्थं भवता एतावत्पर्यन्तं बहुधा प्रयत्नः कृतः। इतः परम् अपि एतस्याः रक्षणभारं भवान् एव निर्वहतु" इति।

तदा शिवानन्दः विनयेन उक्तवान्– "महाप्रभो! प्रमीळायाः रक्षणार्थं विशेष-जागरूकता अपेक्षिता। एषा भवतः अधीने यदि भवेत् तर्हि एव निरपायं तिष्ठेत्" इति।

तद्दिनतः भवत्याः वासः अन्तःपुरे अभवत्। राजा भवत्याः सम्पत्तेः रक्षणभारं शिवानन्दाय अर्पितवान्। शिवानन्दः प्रामाणिकतया कार्यं कारयन् भूमिं प्राणसमानां पश्यन् निर्वञ्चनया व्यवहारं कृतवान्।

एषा वास्तविकी कथा। अत्र केचन अंशाः मया स्वयं दृष्टाः। पुनः केचन कारागारवाससमये ज्ञाताः" इति।

जगन्नाथमुखात् वास्तविकीं कथां श्रुत्वा खेदं प्रकटयन्ती प्रमीळा उक्तवती– "वस्तुस्थितिम् अज्ञात्वा अहं शिवानन्दविषये अन्यथा चिन्तितवती, अनादरं प्रकटितवती च। न जाने, एतदर्थं भगवान् कीदृशं दण्डं विधास्यति इति" इति।

तस्याः सान्त्वनं कुर्वन्तौ उमापतिः जगन्नाथः च पृष्टवन्तौ– "गतं न शोचयेत् प्राज्ञः। इदानीं किं करणीयम् इति भवत्याः निश्चयः? आवाभ्यां च किं करणीयम्?" इति।

"भवतोः अन्यतरः मया सह मम ग्रामम् आगच्छतु। अपरः राजधानीं गत्वा महाराजं मम कुशलवार्तां निवेदयतु। राज्ञः सकाशे एतदपि निवेदनीयं यत् अहं शिवानन्दस्य पुत्रेण परिणीता भवितुं ससन्तोषं सिद्धा अस्मि इति। प्रचलिष्यमाणे मम विवाहोत्सवसन्दर्भे भवद्भ्याम् आगत्य अहम् आशीर्भिः अनुग्रहणीया, येन अहं सुप्रसन्ना भवेयम्" इति उक्तवती प्रमीळा।

अत्रान्तरे वृष्टिः सम्पूर्णतया शान्ता आसीत्। उमापतिः प्रमीळया सह ग्रामं प्रति प्रस्थितवान्। जगन्नाथः पुनः अपि रामनगरस्य मार्गम् अनुसृतवान्।





# सौदामिनी

चन्दनदेशं अनङ्गवर्मा नाम राजा पालयन् आसीत्। तस्य अद्वितीयः सन्तानः सौदामिनीनामिका पुत्री। सौदामिनी यदा त्रिवर्षीया आसीत् तदा एव तदीया माता दिवङ्गता आसीत्। मृतां पत्नीम् एव स्मरन् अनङ्गवर्मा दिनानि यापितवान्। द्वितीयविवाहस्य चिन्तनम् एव अकुर्वन् सः पुत्रीं प्रीत्या पालितवान्। लालनवशात् सा अहङ्कारिणी यथा न भवेत् तथा जागरूकता अपि आश्रिता आसीत् तेन।

यदा सौदामिनी प्राप्तवयस्का जाता तदा सा अपूर्वसुन्दरी जाता। सहजा बुद्धिमत्ता तु आसीत् एव। प्रजानां तु सौदामिनीविषये विशेषादरः। भाविनी राज्ञी भवितुम् एषा अर्हति इति प्रतिदिनं महाराजः साभिमानं चिन्तयति।

एकदा अनङ्गवर्मा पुत्रीं स्वसमीपम् आहूय– "पुत्रि! यावच्छीघ्रं भवत्याः विवाहः करणीयः इति मम विचारः। यदा मयि शक्तिः भवति तदा एव समर्थे अन्यस्मिन् राज्यभारः निक्षेप्तव्यः खलु? भवत्याः भावी पतिः एव राजा भविष्यति इति भवती जानाति एव। अत्र पश्यतु, विविधदेशीयानां राजकुमाराणां चित्राणि अत्र सन्ति। तत्तदीयं गुणशीलादिकं कलादिकं च तैः सह विद्यमानेषु ताडपत्रेषु लिखितम् अस्ति। सम्यक् विचिन्त्य भवती कम् इच्छति इति मां सूचयतु" इति।

सौदामिनी तानि चित्राणि पार्श्वे स्थापयित्वा क्षणकालं मौनं स्थितवती। अनन्तरं महाराजम् उक्तवती– "तात! मम भाविनः पत्युः सौन्दर्यं शौर्यं गुणातिशयः च मया परिशीलनीयं नास्ति। यतः भवति मम विश्वासः अस्ति। किन्तु अहं मम भाविनः पत्युः सौशील्यं परीक्षितुम् इच्छामि। तदर्थं

मया काचित् परीक्षा आयोज्यते। यः ताम् उत्तरति सः एव योग्यः इति मम अभिप्रायः। सौशील्यम् एव परमः गुणः, श्रेष्ठं सौन्दर्यं च इति अहं भावयामि" इति।

पुत्र्याः वचनेन सन्तुष्टः अनङ्गवर्मा पृष्टवान्– "कीदृशी परीक्षा सा?" इति।

"अहं भवन्तम् एकां कथां श्रावयामि। यः मां परिणेतुम् इच्छन् भवतः समीपम् आगमिष्यति तम् एतां कथां श्रावयतु। कथायाम् आगतां समस्यां परिहर्तुं यः शक्नोति सः एव मम पतिः भवितुम् अर्हः" इति उक्त्वा सौदामिनी एकां कथां वक्तुम् आरब्धवती–



पूर्वं वत्सदेशं चित्रसेनो नाम राजा पालयन् आसीत्। तस्य पुत्री कनकप्रभा। यदा सा प्राप्तवयस्का जाता तदा तस्याः सौन्दर्यं लोकविख्यातं जातम्।

एकदा कौण्डिन्यदेशस्य राजा विश्वम्भरः वत्सदेशे प्रचलिष्यमाणस्य उत्सवस्य निमित्तं वत्सदेशम् आगत्य चित्रसेनस्य आतिथ्ये स्थितवान्।

चित्रसेनस्य विश्रान्तिभवने बहूनि चित्राणि आसन्। तेषु अपूर्वम् एकं सुन्दर्याः चित्रम् अपि आसीत्। तत् चित्रं दृष्ट्वा विश्वम्भरः मोहपरवशः सन् स्तब्धतया स्थितवान्।

एतत् दृष्ट्वा चित्रसेनः उक्तवान्– "एतस्मिन् चित्रे चित्रिता सुन्दरी अप्सरसम् अपि अतिशेते खलु? एतस्य चित्रस्य दर्शने ममापि महत् कुतूहलम्" इति।

तदा विश्वम्भरः मन्दहासपूर्वकम् उक्तवान्– "मित्र! मया चित्रे चित्रिता सुन्दरी न परिशीलिता। एतत् चित्रं चित्रकारेण वामहस्तेन लिखितम् इव भाति। तम् अंशम् अहं सूक्ष्मतया परिशीलयन् आसम्" इति।

विश्वम्भरस्य वचनं श्रुत्वा आश्चर्यं प्रकटयन् चित्रसेनः उक्तवान्– "न, सर्वथा असम्भवम् एतत्। एतत् चित्रं चित्रितवन्तं मधुरसेनम् अहं जानामि। तेन दक्षिणहस्तेन चित्र्यमाणं मया स्वयं दृष्टम्। भवता एव अन्यथा गृहीतम्" इति।

"भवान् यदा उपस्थितः आसीत् तदा तेन



दक्षिणहस्तेन चित्रितं स्यात्। वस्तुतः तु एतत् वामहस्तेन एव चित्रितम्" इति उक्तवान् विश्वम्भरः।

चित्रसेनः स्पर्धाभावेन उक्तवान्– "एवं वा? अस्तु तावत्। इदानीम् एव मधुरसेनम् आहूय पृच्छामि। भवता उक्तं सत्यम् एव चेत् मम पुत्री कनकप्रभा भवते दीयते। अनुमतं खलु?" इति।

तदा विश्वम्भरः अङ्गीकारपूर्वकं शिरः चालयन्– "भवतः प्रस्तावः अनुमतः एव। यदि मम वचनम् असत्यं स्यात् तर्हि भवतः देशस्य अभिवृद्धिकार्यार्थं प्रतिवर्षं पञ्चाशत्सहस्रं सुवर्णनाणकानि दास्यामि" इति उक्तवान्।

चित्रसेनः एतत् अङ्गीकृतवान्। अनन्तरं सः मधुरसेनं स्वसमीपम् आनायितवान्। राज्ञा पृष्टः मधुरसेनः यद्यपि आरम्भे किमपि किमपि उक्तवान्, किन्तु अन्ते 'एतत् चित्रं वस्तुतः वामहस्तेन एव लिखितम्' इति वस्तुस्थितिम् अङ्गीकृतवान्।

एतत् श्रुतवतः चित्रसेनस्य मुखं क्षणकालं म्लानम्। तथापि सः झटिति समस्थितिं प्राप्य मधुरसेनं प्रेषितवान्। विश्वम्भरम् उक्तवान् च– "यद्यपि मया पराजयः प्राप्तः, किन्तु तेन मम लाभः एव। आवयोः स्नेहः बन्धुत्वरूपेण परिणतः भविष्यति। महाराज्ञीं कनकप्रभां च निवेद्य अचिरात् एव विवाहमुहूर्तस्य निश्चयं करिष्यामि" इति।

'यथा भवान् इच्छति तथा' इति वदन् अङ्गीकारं दत्तवान् विश्वम्भरः।

एवं स्थिते, एकदा कनकप्रभा स्वमात्रा इन्दुमतीदेव्या सह इष्टदेव्याः स्वयंप्रभादेव्याः आलयं गत्वा प्रत्यागच्छन्ती आसीत्। तदा चत्वारः चोराः तेषाम् उपरि आक्रमणं कृतवन्तः। शिबिकावाहकाः यद्यपि विरोधं कृतवन्तः, किन्तु चोराणाम् एव तत्र जयः जातः। मार्गे गच्छन्तः जनाः तु ततः पलायनं कृतवन्तः।

चत्वारः ते चोराः राज्ञीसमीपम् आगतवन्तः। अत्रान्तरे कश्चन युवकः वीरः चोराणाम् उपरि आक्रमणं कृतवान्। तस्य खड्गप्रहारेण भीताः चोराः ततः पलायितवन्तः।

राजभटाः अनुसृत्य गत्वा तान् चतुरः अपि चोरान् बद्ध्वा कारागारे स्थापितवन्तः।

राज्ञी इन्दुमतीदेवीं तं युवकं पृष्टवती— "कः भोः भवान्?" इति।

सः युवकः विनयेन नमस्कृत्य उक्तवान्— "महाराज्ञि! मम नाम राजशेखरः इति। महासेनाधिपतेः त्रिविक्रमवर्मणः समीपबन्धुः अहम्" इति।

एतत् श्रुत्वा इन्दुमतीदेवी परमसन्तोषेण— "अहो! महासेनाधिपतिना पुत्रवत् पाल्यमानः तदीयभगिन्याः पुत्रः भवान् एव वा?" इति पृष्टवती।

राजशेखरः अङ्गीकारपूर्वकं शिरः चालितवान्। इन्दुमतीदेवी तम् आपादमस्तकम् एकवारं दृष्ट्वा— "भवान् विद्याभ्यासार्थं काशीं गतवान् आसीत् खलु? किं विद्याभ्यासः समाप्तः? कदा ततः प्रत्यागतवान्?" इति पृष्टवती।

"विद्याभ्यासं समाप्य मासात् पूर्वम् एव आगतवान् अम्ब!" इति उत्तरं दत्तवान् राजशेखरः।

"महान् सन्तोषः। भवता उपकारः यः कृतः तेन अहं ऋणिनी अस्मि। ऋणात् विमोचनं प्राप्तुं किं ददामि? यदि शक्यं मम समीपे स्थितम् एतत् अनर्घ्यं रत्नं भवते दास्यामि" इति उक्त्वा शिबिकाम् आरुह्य सा प्रासादं प्रति गतवती।

कनकप्रभां भवते दास्यामि इति सूच्यरूपेण राज्ञ्या यत् उक्तं तत् पुनः पुनः स्मरन् मनसि एव हसितवान् राजशेखरः।



एवं कनकप्रभायाः विवाहविषये राजराज्ञयोः मध्ये भिन्नाभिप्रायः उत्पन्नः। तद्दिने एव कनकप्रभा सखीभिः सह राजोद्याने विहरन्ती आसीत्। सखीनाम् अपेक्षानुसारम् एकं गीतं गीत्वा सा, तमेव गीतं मन्दस्वरेण पुनः गायन्ती लतामण्डपं प्रविष्टवती।

तत्समये वरुणदत्तः नाम गन्धर्वः आकाशमार्गेण गच्छन् कनकप्रभायाः अलौकिकं सौन्दर्यं दृष्टवान्। तेन आकृष्टः सः अग्रे गन्तुम् अशक्तः तस्याः समीपे अवतीर्णवान्।

अकस्मात् प्रत्यक्षीभूतं गन्धर्वं दृष्ट्वा कनकप्रभा आश्चर्येण स्तब्धा अभवत्। सख्यः तु भीत्या पलायितवत्यः।

वरुणदत्तः कनकप्रभाम् उत्साहेन उक्तवान्– "भवत्याः अपूर्वं सौन्दर्यम् आकाशमार्गेण गच्छन्तं माम् आकृष्य अत्र आनयत्। वरुणदत्तनामकः गन्धर्वः अहम्। भवती यदि अङ्गीकरोति तर्हि अहं भवतीं परिणेतुम् इच्छामि" इति।

गन्धर्वं प्रति किं वक्तव्यम् इति क्षणकालम् आलोचितवती कनकप्रभा। 'एषः दिव्यः पुरुषः गन्धर्वः विद्याधराम् अप्सरसं वा विहाय मां परिणेतुम् इच्छति। एषः तु मम अभिमानस्य विषयः, सौभग्यस्य विषयः अपि। अहं यथाकथमपि परगृहं प्रति गन्त्री एव। अतः कुतो वा एषः एव मया न परिणेतव्यः?' इति तस्याः विचारः।

'मम अङ्गीकारः अस्ति' इति वक्तुं यावत् सा उद्युक्ता तावता मातापितरौ तस्याः स्मरणे आगतौ।

अतः सा विचारं परिवर्त्य वरुणदत्तम् उक्तवती– "अहं तु कन्यका। कन्यका मातापित्रोः अधीना खलु? अतः श्वः मातापित्रोः पुरतः एव मम अभिप्रायं प्रकटयितुं शक्नोमि" इति।

वरुणदत्तः मन्दहासं प्रकटयन्– "अस्तु तर्हि, श्वः आगमिष्यामि" इति उक्त्वा ततः निर्गतवान्।

(आगामिसञ्चिकायां समाप्ता भविष्यति।)





# धनस्य प्राधान्यम्

विमलानन्दः नाम संन्यासी कदाचित् तीर्थयात्रां कुर्वन् स्वशिष्यैः सह रङ्गपुरनामकं ग्रामम् आगतवान्। तस्मिन् ग्रामे परमेशनामकः महाधनिकः आसीत्। अतः सः एव संन्यासिनः तच्छिष्याणां च वसतिभोजनादीनां व्यवस्थां स्वयं कृतवान्।

केषाञ्चित् दिनानाम् अनन्तरं विमलानन्दः ततः प्रस्थितवान्। तदा सः तत्र उपस्थितान् आशिषा अनुगृह्य स्वपार्श्वे विनयेन स्थितवन्तं परमेशं पृष्टवान्– "भोः, भवान् तु आगर्भधनी। एवं स्थिते कया कामनया भवान् मम सेवां श्रद्धया कृतवान् इति ज्ञातुं शक्नोमि वा?" इति।

तदा परमेशः– "स्वामिपादाः, मनुष्यजीवने धनम् एव प्रधानं न खलु। भवादृशानां सेवातः अपि श्रेष्ठं कार्यं किम् अन्यत् स्यात्? भवतां सेवा एव परमं फलम्" इति उक्तवान्।

विमलानन्दः तस्य उत्तरेण सन्तुष्टः सन् तम् आशिषा अनुगृह्य अग्रे गन्तुम् उद्युक्तः अभवत्।

तदा राजारामः नाम कृषकः अग्रे आगत्य– "स्वामिपादाः! मम कश्चन सन्देहः। मानवजीवने धनं प्रधानं न इति सर्वे वदन्ति। एवं कथनम् उचितं भवेत् वा?" इति पृष्टवान्।

तदा विमलानन्दः पृष्टवान्– "सत्यस्य कथने कः सङ्कोचः? सत्यकथनं को वा निषेद्धुम् अर्हति? अस्तु तावत्, भवतः मनसि एषः सन्देहः कथम् उत्पन्नः?" इति।

तदा राजारामः– "स्वामिपादाः! मम कुटुम्बं विशालम्। प्रतिदिनम् अपि सूर्योदयतः रात्रिपर्यन्तं कार्यं कुर्वन् अपि अहं पत्नीपुत्रादीनां पोषणे महत् कष्टम्

"भामहः"

अनुभवामि। एतस्मिन् ग्रामे मादृशाः एव बहवः निवसन्ति। एवं स्थिते मनुष्यजीवने धनम् अप्रधानम् इति कथनस्य कः अर्थः? प्रायः परमेशसदृशानां धनिकानां दृष्ट्या धनम् अप्रधानं भवेत्, न तु सर्वेषां दृष्ट्या" इति सधैर्यम् उक्तवान्।

राजारामस्य कथनं श्रुत्वा तत्रस्थाः सर्वे हसितवन्तः। राजारामः शिरः अवनमय्य स्थितवान्।

तदा विमलानन्दः सगम्भीरम् उक्तवान्– "राजारामः सत्यम् एव उक्तवान्। अत्र हासयोग्यं किमपि नास्ति। जीवने धनं साधनं, न तु लक्ष्यम् इति तु सत्यम् एव। किन्तु येषां जीवने साधनम् एव न भवति तेषां दृष्ट्या तस्य सम्पादनम् एव तात्कालिकं लक्ष्यं भवति। तादृशानाम् आवश्यकतापूरणार्थं धनिकाः कार्यं कुर्युः। दरिद्राणाम् उन्नत्यर्थं ते योजनां कुर्युः। मादृशानां सेवार्थं तैः अपारधनव्ययः यत् क्रियते तेन कः लाभः? आत्मनि कश्चन धन्यताभावः जायते। इतरैः कर्तुम् असाध्यं कार्यं मया कृतम् इति भावयन्ति ते" इति। जनाः सर्वे एतत् अङ्गीकुर्वन्तः शिरः चालितवन्तः।

विमलानन्दः परमेशस्य स्कन्धे हस्तं स्थापयन् पुनः उक्तवान्– "परमेश! मादृशानां सेवातः अपि श्रेष्ठं कार्यं किं स्यात् इति पृष्टवान् खलु भवान्? तादृशं कार्यं किम् इति प्रदर्शितवान् राजारामः। कदाचित् आगच्छताम् अस्मादृशानां सेवार्थं विशेषव्ययः करणीयः नास्ति। ग्रामीणानां निर्धनानां सेवा एव परमश्रेष्ठा। एतया एव भवतः कीर्तिः गौरवं च। एतया एव भवतः धनिकत्वस्य सार्थकता। मम सञ्चारकाले इतः पूर्वं बहवः बहून् प्रश्नान् पृष्टवन्तः। किन्तु राजारामेण यत् पृष्टं तत् तु अपूर्वम् आसीत्" इति उक्त्वा शिष्यैः सह अग्रे गतवान्।

अनन्तरं परमेशः ग्रामीणानाम् उन्नत्यर्थं स्वधनस्य व्ययं कुर्वन्, तत्रैव स्वजीवनस्य सार्थकतां पश्यन् सुखेन जीवितवान्।



# प्रकृतिवैचित्र्याणि–



## द्रवीभवन्ति हिमपर्वताः

आर्कटिक्समुद्रे स्थिताः हिमपर्वताः गल्फप्रवाहे प्रवेशस्य अनन्तरं सप्ताहत्रयावधौ द्रवीभवन्ति।




## विभिन्नजातीयाः तालवृक्षाः

२,८०० जातीयाः तालवृक्षाः सन्ति। एते अधिकतया उष्णप्रदेशे एव दृश्यन्ते। तथापि एतेषु जातिद्वयीयाः ऐरोप्यखण्डमलीयाः



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अशनिः - | Thunderbolt |
| अपूर्वः - | Pancake |
| उद्घुष्टवान् - | Announced |
| उपलिप्तः - | Smeared with cow-dung |
| उलूकः - | Owl |
| उष्णीषः - | Turban (Head-dress) |
| ऋणिनी - | Woman under an obligation |
| कदन्नम् - | Rotten rice |
| कर्णलुण्ठनम् - | Squeezing the earlobe |
| कलिङ्गम् - | Watermelon |
| काणः - | One-eyed person |
| कार्पासः - | Cotton |
| कासः - | Cough |
| किङ्किणी - | Tinklers |
| कुब्जः - | Dwarf |
| कूपिका - | Bottle |
| केसरः - | Mane of a lion |
| गन्त्री - | Woman on the go |
| गुलिका - | Pill |
| घर्मः - | Sultriness |
| छत्रम् - | Umbrella |
| जवनिका - | Curtain |
| जितेन्द्रियः - | One who has conquered his senses |
| तडित् - | Lightning |
| तिन्त्रिणीवृक्षः - | Tamarind tree |
| धीवरः - | Fisherman |
| नकुलः - | Mungoose |
| पाठनम् - | Teaching |
| प्रसूते - | Delivers |
| प्रसूय - | Having delivered |
| प्रासादः - | Palace |
| मरीचिका - | Chilli |
| मातुलानी - | Maternal uncle's Wife |
| मेघगर्जनम् - | Sound of thunder |
| यवागूः - | Gruel |
| वर्षोपलः - | Hailstone |
| शर्करा - | Sugar |
| शृगालः - | Jackal |
| षष्कुली - | Snack made of rice |
| सम्मार्जकः - | Sweeper |
| सम्मार्जनी - | Broom |
| हलम् - | Plough |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां अगस्ट्-८८ मासे प्रकटयिष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **सादृश्यसत्त्वेऽपि न हंसकीर्तिः।**

द्वितीयचित्रम् - **पङ्केरुहत्वेऽपि न पङ्कजानि।**

प्रेषकः - श्री एम्. स्वामिनाथन्, ओरियण्टल् हैस्कूल्, तञ्जावूरु-६१३००१.


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०-००

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# हुर्रा!

## मैगी फ़न बुक!

Look out for the 'FUN WORLD CONTEST inside!

MAGGI®

FUN BOOK

Join the MAGGI Club! Details inside...

मैगी नूडल्स के 2 खाली पैकेटों के बदले में!

अपने नज़दीकी विक्रेता से सम्पर्क करें अथवा कूपन को इस पते पर भेजें:

**मैगी फ़न बुक**
**पोस्ट बैग-9**
**नई दिल्ली-110 001**

मनोरंजक खेल, मैगी क्लब, रोचक पहेलियां... और बहुत कुछ!
अपनी प्रति आज ही लीजिए!




मेरा नाम ____________________

मेरा पता ____________________




पल भर में तैयार! खाने में मज़ेदार!

